**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमं मुद्रणम् - २००७ - २०००
द्वितीयं मुद्रणम् - २००८ - २०००

मूल्यं - **रू. २०.००**

मुखपुटकला - **महेन्द्रः**

*मुद्रणम्* -
**नन्दी प्रोसेस्**
त्यागराजनगरम्, बेङ्गलूरु - २८

**ISBN 978-81-88220-52-6**

**ID VYAVASTHA** - A study book on the principles of 'Idagama' in 'Krit' suffixes prepared by **Janardana Hegde.**
Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.

Pages - 62 + x, Price - Rs. 20-00 Second Print - Dec - 08
Printed at - **Nandi Process,** T.R.Nagar, Bangalore - 560 028

# आमुखम्

सूत्रप्रस्थानं प्रक्रियाप्रस्थानमिति द्वेधा अध्ययनक्रमः पाणिनीयस्य । केचन विषयाः सूत्रप्रस्थानेन सुष्ठु ज्ञायन्ते, पुनः केचन प्रक्रियाप्रस्थानेन । सुत्रप्रस्थानेन णत्व-षत्वादीनाम् अवगमः सुगमः । तत्र अन्यतमः विषयः इट् । इटः व्यवस्था नान्तरा सूत्रक्रमं न जातु ज्ञायेत । धातवः तदधिकारे विहिताः प्रत्ययाः च सेटः, अनिटः, वेटः इति त्रेधा । इटा सह (इकारेण सह) वर्तते इति सेट्, न विद्यते इट् यस्य सः अनिट्, वा इट् यस्य सः वेट् इति विवेकः ।

सप्तमाध्यायस्य द्वितीये पादे एकसप्तत्या सूत्रैः इड्व्यवस्था निरूप्यते । तत्र इड्विधिः ऊनविंशत्या (१९) सूत्रैः, इण्निषेधः पञ्चविंशत्या (२५) सूत्रैः, विकल्पः अष्टादशभिः सूत्रैः, इटः दीर्घसम्बन्धीनि कार्याणि चतुर्भिः सूत्रैश्च निरूप्यन्ते । प्रत्येकं साक्षात् विधिमुखेन, निपातनेन, किञ्चिन्निमित्तेन इति त्रेधा गतिः । अत्र इड्विधिः तन्निषेधश्च ज्ञातव्यौ एव । इड्विकल्पविधिः सामान्यश्चेत् तदज्ञाने अपि प्रयोगः न दुष्यति, अन्यतरस्य साधुत्वात् । परन्तु अर्थविशेषे, निमित्तविशेषे च यदि विकल्पः तर्हि स विधिः ज्ञातव्य एव । यथा 'रुषि-अम-त्वर-सङ्घुष-आस्वनाम्' इति सामान्यविधिः । तत्र रुषितः रुष्टः इत्युभयं साधु । अतः अन्यतरप्रयोगे न दोषः । 'हृषेर्लोमसु' इति विधिः अर्थविशेषे अस्ति । अत लोम्नः चेदेव हृष्टः हृषितः इति, तदन्यत्र हृष्टः रमेशः इति अलीकार्थे, हृषितः रमेशः इति तुष्ट्यर्थे चेति विवेकः । एतादृशः विकल्पविधिः ज्ञातव्यः एव, अन्यथा अर्थान्तरप्रतिपत्तिः स्यात्, अपशब्दापत्तिर्वा । छन्दोविधिः लौकिकप्रयोगविषयः न भवति । अतः लोके तदज्ञानेऽपि व्यवहारः प्रवर्तेत । दीर्घसम्बन्धीनि सूत्राणि यद्यपि ज्ञातव्यानि प्रयोगदृष्ट्या, तथापि इड्दृष्ट्या न ।

क्वचिद् इड्विधेः इण्निषेधे एव तात्पर्यम् । यथा 'स्नु-क्रमोरनात्मनेपदनिमित्ते' इत्यत्र सत्यात्मनेपदे इटः निषेध एव, न तु इड्विधानम् । आपाततः विधिरिति ग्रहणम् । अत एव काशिका - 'प्रतिषेधफलं चेदं सूत्रम्' इति ।

उणादिषु इड्व्यवस्था अव्युत्पन्नेति भाष्यम् । अत एव 'आर्धधातुकस्येड्-वलादेः' इत्यत्र योगविभागं प्रस्तुय 'नेड् वर-र-म-नादौ कृति' इत्युक्त्वापि वशादिः अप्रतिषिद्धः इति प्रदर्श्य उणादयोऽव्युत्पन्नानि प्रातिपदिकानि इत्येव समाहितं भाष्ये ।

प्रकरणेऽस्मिन् 'यस्य विभाषा' इति सूत्रार्थः अवधेयः । यस्मात् धातोः विकल्पेन इड्विहितः, तस्य धातोः निष्ठाप्रत्यये परेऽपि इण्निषेधः इति सूत्रार्थः । तथा च वृद्ध्वा इति इटः विकल्पे ज्ञाते, निष्ठायां वृद्धः, वृद्धवान् इति इण्निषेधः ज्ञेयः ।

इड्व्यवस्थाज्ञाने अनुबन्धस्यापि महत्त्वम् अस्ति । धातवः प्रत्ययाश्च सानुबन्धाः । प्रक्रियादशायां निरनुबन्धाः आश्रीयन्ते । किं तर्हि अनुबन्धानां धातु-प्रत्यययोः प्रयोजनम् ? अनुबन्धाः कार्यं, तदप्रवृत्तिं वा निर्दिशन्ति इति प्रयोजनं दृष्टम् । तद्यथा - हुर्च्छा (कौटिल्ये) इति कश्चन धातुः । अत्र आकारः अनुबन्धः । तत्प्रयोजनं निष्ठायाम् इण्निषेधः । तेन हूर्णवान्, हूर्णः इति रूपे । शमु (उपशमे) इति धातुः । अत्र उकारः अनुबन्धः । तत्प्रयोजनं क्त्वाप्रत्यये परे वा इट् । तेन शमित्वा, शान्त्वा इति । ओस्वृ (शब्दोपतापयोः) इति धातुः । अत्र ओकारः अनुबन्धः । तत्प्रयोजनं सामान्येन सर्वत्र इड्विकल्पः । तेन स्वर्ता, स्वरिता, सुस्वूर्षति, सिस्वरिषति इत्यादि । पां (पाने) इति सानुस्वारः धातुः इति पक्षः । तत्पक्षे अनुस्वारः अनुबन्धः । तत्प्रयोजनं तस्य अनिट्त्वम् । तेन पाता, पास्यति इत्यादि ।

इड्व्यवस्थाप्रकरणे सूत्रे क्वचिद् धातूनां सामान्यतः निर्देशे कः धातुरिति संशयः । तत्र तद्रूपाः सर्वे धातवः इति केचित् मन्यन्ते । क्वचिदन्यथा । यथा उकारान्तेषु रुग्रहणेन शब्दार्थः गतिरेषणार्थश्चेति उभयग्रहणमिति केचित् । परन्तु क्षुसाहचर्यात् शब्दार्थ एवेति पक्षान्तरम् । तन्मते शब्दार्थः एव सेट्, तदन्यः अनिट् इति विवेकः । एवमेव यु मिश्रणे एव साहचर्यात् गृह्यते, न तु यु बन्धने इत्यपि पक्षः । अत्रापि पूर्ववत् सेट्त्वानिट्त्वविवेकः ।

इड्व्यवस्थाप्रकरणे धातुरत्नाकरकारस्य मतं विशिष्टं किञ्चित् द्रष्टव्यं सेडनिट्कारिकारूपेण सङ्गृहीतम् । मुनिश्रीलावण्यविजयः धातुरत्नाकरे सेट्कारिकाः अनिट्कारिकाश्च प्रकारान्तरेण दर्शयति । तासां सङ्ग्रहः पाठकानाम् उपयोगाय क्रियतेऽत्र -

श्वि-श्रि-डी-शी-यु-रु-क्षु-क्ष्णु-क्ष्णु-स्नुभ्यश्च वृगो वृङः ।<br>
ऊदृदन्तयुजादिभ्यः स्वरान्ताः धातवः परे ॥१॥<br>
पाठः एकस्वराः स्युर्येऽनुस्वारेतः इमे स्मृताः । इति सेट्कारिका ।

ततः व्यञ्जनान्ताः अनिटः निर्दिश्यन्ते -

द्विविधोऽपि शकिश्चैवं वचिर्विचिरिची पचिः ॥२॥

# प्रास्ताविकं किञ्चित्

## (प्रथममुद्रणस्य)

यदा अहं छात्रदशायाम् आसं ततः आरभ्य जिज्ञासा आसीत् इड्व्यवस्थाविषये । श्लोकरूपेण स्थितः अनिटां धातूनां सङ्ग्रहः कौमुद्यां दृष्टः आसीत् । प्रसङ्गवशात् तत्र तत्र इड्व्यवस्थासम्बद्धानि सूत्राणि तु दृष्टानि आसन् । किन्तु 'व्यवस्थायाः' इयत्ता न अवगता आसीत् ।

इड्व्यवस्था धातून् यथा, तथैव प्रत्ययान् अपि अवलम्बते । धातवः द्विविधाः - सेटः अनिटः चेति । (केचन वेटः अपि ।) सेटः धातवः सर्वे इडागमं प्राप्नुवन्ति एव इति नास्ति । सेटां धातूनां पुरतः स्थिताः केचन प्रत्ययाः इडागमं प्राप्नुवन्ति । पुनः केचन न । प्रत्ययम् अवलम्ब्य अपि इडागमः व्यवस्थापितः पाणिनिना । यथा -

- भूधातुः सेट् चेदपि निष्ठायां तस्य अनिट्ता । अतः 'भूतः' 'भूतवान्' इति रूपम् ।
- वसधातुः अनिट् । निष्ठायां सः एव सेट् । उदा - उषितः/उषितवान् ।
- केचन धातवः निष्ठायाम् अर्थविशेषे इटं प्राप्नुवन्ति ।

उदा - स्वनधातुः मनोऽर्थे अनिट् - स्वान्तम्<br>
स्वनधातुः तद्भिन्नार्थे सेट् - स्वनितो मृदङ्गः

एतस्मात् एव कारणात् एषा व्यवस्था दुरधिगमा जाता । तस्मात् एव प्रायः वचनं श्रूयते - 'अहो, कठिना व्यवस्था सा !!' इति ।

पाणिनेः तु अत्र 'सुव्यवस्था' एव अस्ति । वस्तुतः पाणिनिव्याकरणे 'अव्यवस्था' (व्यवस्थाराहित्यम्) कुत्रापि नास्ति । 'अपरिष्कृतता' अपि नास्ति । तां व्यवस्थां यः न ज्ञातवान् सः तु अव्यवस्थायाः आभासम् अनुभवेत् क्वचित् ।

पाणिनिना सप्तमाध्यायस्य द्वितीये पादे इड्व्यवस्थासम्बद्धानि सर्वाणि सूत्राणि एकत्र सङ्गृहीतानि । सप्तषष्ट्या (६७) सूत्रैः सः समग्राम् इड्व्यवस्थां (वैदिकीं लौकिकीं चापि) सङ्गृह्णाति ।

कृत्सु इड्व्यवस्था मम जिज्ञासाविषयः आसीत् बहोः कालतः। 'कन्नडसंस्कृतक्रियापदकोष'रचनादिषु प्रसङ्गेषु सा माम् अबाधत अपि बहुधा। यदा 'बाधा' तीव्रा भवति तदा एव प्रवृत्तिः भवति। बाधायाः मन्दतायां तु कार्यान्तरव्यापृतता अध्ययनात् निवारयति अस्मान्। इड्व्यवस्था तु माम् आ दीर्घकालात् बाधते स्म, किन्तु मार्गः तु न प्राप्यते स्म।

मम जिज्ञासा तु प्राधान्येन आसीत् कृत्सम्बद्धायाः इडागमव्यवस्थायाः विषये। अतः कौमुद्यां काशिकायां च सेडनिड्धातूनां विषये यत् उक्तं तत् सोदाहरणं सङ्गृहीतम् आसीत् कदाचित्। तृच्तुमुन्नादिसम्बद्धानि सूत्राणि अपि कदाचित् आकलितानि आसन्। 'यस्य विभाषा' इत्यस्य सूत्रस्य व्याप्तिविषये किञ्चित् चिन्तितम् आसीत्।...

अत्रान्तरे एव (वर्षात् पूर्वं) डा० पुष्पादीक्षितवर्यया हिन्दीभाषया लिखितम् '*आर्धधातुक प्रत्यय तथा उनकी इडागमव्यवस्था*' नामकं लघु पुस्तकं क्वचित् मया प्राप्तम्। तत्र स्थिताः विषयनिरूपणविषयविभागादयः मह्यम् अरोचन्त।

एतेनैव क्रमेण 'संस्कृतभारती'कार्यकर्तॄन् मनसि निधाय किञ्चन लघुपुस्तकं सज्जीकरणीयम् इत्येषः विचारः मनसि आगतः। तस्यैव फलम् अस्ति भवद्धस्तगतम् एतत् लघु पुस्तकम्।

संस्कृतव्याकरणक्षेत्रे पाणिनिना व्याकरणशास्त्रसम्बद्धं सर्वम् अपि सुपरिष्कृततया सुव्यवस्थिततया च निरूपितम् एव। महान्तः वैयाकरणाः तु तस्यैव आशयं पाण्डित्यबलात् विशदीकुर्वन्ति। अन्ये केचन तु पाणिनिना उक्तम् एव भङ्ग्यन्तरेण उपस्थापयन्ति। मया तु अत्र इड्व्यवस्थासम्बद्धः विषयः विवरणमुखेन उपस्थापितः। कृत्प्रकरणमात्रे मम तात्पर्यम् इत्यतः तिङ्सम्बद्धा व्यवस्था अत्र न निरूपिता।

सिद्धान्तकौमुद्यादिषु व्याकरणं यद्यपि समग्रतया निरूपितं दृश्यते, तथापि ते सामान्यानां दृष्ट्या तु महद्यन्ते। ते च ग्रन्थाः शास्त्रीयाः इत्यतः तेषु शास्त्रशैली एव आश्रीयते सहजतया। किन्तु सामान्यानां रुचिः, प्रवृत्तिः, आवश्यकता च इतः पूर्णा न भवति। सामान्याः तु प्रकरणशः विभक्तं लघुकायं ग्रन्थम् इच्छन्ति। अधिकोदाहरणयुक्तं विवरवमुखं ग्रन्थम् इच्छन्ति।

कौमुद्यादिग्रन्थान् अवलम्ब्य विद्वांसः विविधानाम् अंशानाम् इयत्तां फलितार्थं च निर्णयन्ति। एतदनुगुणतया एव तत्र विषयोपस्थापनं, व्याख्यानादीनि च भवन्ति। सामान्यानां कृते तु एतत् गड्ड भवति। अतः एव सामान्यशास्त्रज्ञानवन्तः अपि संस्कृतज्ञाः तेषां ग्रन्थानाम् उपयोगम् अल्पशः एव कुर्वन्ति। यत्र इयत्तानिर्णयपुरस्सरं सरलया शैल्या विषयनिरूपणं क्रियेत तादृशं ग्रन्थम् उपकारकं मन्यन्ते ते। कालस्य एताम् आवश्यकतां मनसि निधाय एव संस्कृतभारत्या सन्धिसमासादिनाम्ना लघवः ग्रन्थाः प्रकाशिताः। तस्याम् एव सरणौ अन्तर्भवति अयं लघुः ग्रन्थः अपि।

'सूत्राणाम् आशयः विवरणमुखेन उपस्थापनीयः, येन सामान्याः अपि विषयम् अवगन्तुं शक्नुयुः' इति तु मूलचिन्तनम्। किन्तु क्वचित् सूत्रम् उपस्थापितं चेदेव विषयस्य अवगमनं स्पष्टं भवेत्, नान्यथा। अतः सूत्राणि अत्र विवरणस्य अङ्गतया एव प्रदत्तानि।

विदुषा महाबलेश्वरभट्टमहोदयेन, विदुषा रामानुजदेवनाथमहोदयेन च पुस्तकमेतत् आन्तं परिशील्य यथोचितः परिष्कारः सूचितः। तदर्थं तौ कृतज्ञतापूर्वकं स्मर्येते मया। कलाकाराय मुद्रकाय अन्येभ्यः सहकारिबन्धुभ्यः च अनेके धन्यवादाः।

**– जनार्दन हेगडे**

व्यय सं।। फाल्गुनकृष्णत्रयोदशी
१७.०३.०७

## (द्वितीयमुद्रणस्य)

द्वितीयं मुद्रणं यत् प्रचलत् अस्ति तत् महते सन्तोषाय। मुद्रकाय, सहकृतवद्भ्यः सर्वेभ्यः च कृतज्ञताः समर्प्यन्ते।

सर्वधारि सं ।। मार्गशीर्षपूर्णिमा **– प्रकाशकः**
१२.१२.२००८

सिद्धान्तकौमुद्यादिषु व्याकरणं यद्यपि समग्रतया निरूपितं दृश्यते, तथापि ते सामान्यानां दृष्ट्या तु महद्यन्ते । ते च ग्रन्थाः शास्त्रीयाः इत्यतः तेषु शास्त्रशैली एव आश्रीयते सहजतया । किन्तु सामान्यानां रुचिः, प्रवृत्तिः, आवश्यकता च इतः पूर्णा न भवति । सामान्याः तु प्रकरणशः विभक्तं लघुकायं ग्रन्थम् इच्छन्ति । अधिकोदाहरणयुक्तं विवरवमुखं ग्रन्थम् इच्छन्ति ।

कौमुद्यादिग्रन्थान् अवलम्ब्य विद्वांसः विविधानाम् अंशानाम् इयत्तां फलितार्थं च निर्णयन्ति । एतदनुगुणतया एव तत्र विषयोपस्थापनं, व्याख्यानादीनि च भवन्ति । सामान्यानां कृते तु एतत् गड्डु भवति । अतः एव सामान्यशास्त्रज्ञानवन्तः अपि संस्कृतज्ञाः तेषां ग्रन्थानाम् उपयोगम् अल्पशः एव कुर्वन्ति । यत्र इयत्तानिर्णयपुरस्सरं सरलया शैल्या विषयनिरूपणं क्रियेत तादृशं ग्रन्थम् उपकारकं मन्यन्ते ते । कालस्य एताम् आवश्यकतां मनसि निधाय एव संस्कृतभारत्या सन्धिसमासादिनाम्ना लघवः ग्रन्थाः प्रकाशिताः । तस्याम् एव सरणौ अन्तर्भवति अयं लघुः ग्रन्थः अपि ।

'सूत्राणाम् आशयः विवरणमुखेन उपस्थापनीयः, येन सामान्याः अपि विषयम् अवगन्तुं शक्नुयुः' इति तु मूलचिन्तनम् । किन्तु क्वचित् सूत्रम् उपस्थापितं चेदेव विषयस्य अवगमनं स्पष्टं भवेत्, नान्यथा । अतः सूत्राणि अत्र विवरणस्य अङ्गतया एव प्रदत्तानि ।

विदुषा महाबलेश्वरभट्टमहोदयेन, विदुषा रामानुजदेवनाथमहोदयेन च पुस्तकमेतत् आन्तं परिशील्य यथोचितः परिष्कारः सूचितः । तदर्थं तौ कृतज्ञतापूर्वकं स्मर्येते मया । कलाकाराय मुद्रकाय अन्येभ्यः सहकारिबन्धुभ्यः च अनेके धन्यवादाः ।

व्यय सं।। फाल्गुनकृष्णत्रयोदशी — **जनार्दन हेगडे**
१७.०३.०७

# अन्तरङ्गम्

## प्रथमः अध्यायः

# इड्व्यवस्था नाम का ?

'पठितुम्' इत्येतत् रूपं पश्यत । तत्र 'पठ्' इति धातुः । प्रत्ययः तुमुन् । धातु-प्रत्यययोः मध्ये (पठ् + इ + तुम् ) यः इकारः दृश्यते सः 'इट्' इति उच्यते । सः आगमरूपः । अतः 'पठितुम्' इत्यत्र इडागमः अस्ति इत्यर्थः ।

अयम् इडागमः न नित्यः । 'क्रीडितुम्' (क्रीड् + तुमुन् ) 'ताडयितुम्' (ताडि + तुमुन् ) इत्यादिषु सः दृश्यते । किन्तु तुमुन्नन्तेषु एव 'श्रोतुम्' 'ज्ञातुम्' इत्यादिषु सः न दृश्यते ।

एवमेव तव्यदन्तेषु दृश्यताम् । 'डयितव्यम्' 'जनितव्यम्' 'पठितव्यम्' इत्यादिषु इडागमः दृश्यते । किन्तु 'स्थातव्यम्' 'घ्रातव्यम्' 'धर्तव्यम्' इत्यादिषु सः न दृश्यते ।

तृजन्तेषु अपि एवमेव । 'भविता' 'पूजयिता' इत्यादिषु इडागमः दृश्यते । 'द्रष्टा' 'क्षेप्ता' इत्यादिषु सः न दृश्यते ।

क्तान्तेषु अपि एतादृशी एव व्यवस्था । 'पठितः' 'लिखितः' इत्यादिषु इटः प्रसक्तिः । किन्तु 'गतः' 'नीतः' इत्यादिषु इटः प्राप्तिः न ।

तिङन्तेषु अपि लिट्लडादिषु क्वचित् इटः प्राप्तिः, क्वचित् न ।

तुमुन्नन्त-क्त्वान्त-तव्यदन्तादीनि रूपाणि दैनन्दिने व्यवहारे बहुधा उपयुज्यन्ते एव । तस्मात् इडागमस्य प्राप्तेः अप्राप्तेः च विषये सर्वदा सन्देहः भवति एव । 'का व्यवस्था' इति जिज्ञासा तु आपण्डितपामरं जागर्ति । तस्मात् इड्व्यवस्थाविषये किञ्चिदत्र निरूप्यते ।

| प्रत्ययः | | |
|---|---|---|
| क्तः – | पठितः (पठ्) <br> चोरितः (चुर्) | गतः (गम्) <br> ध्यातः (ध्यै) |
| तुमुन् – | क्रीडितुम् (क्रीड्) <br> ताडयितुम् (ताड्) <br> जीवितुम् (जीव्) | ज्ञातुम् (ज्ञा) <br> आप्तुम् (आप्) <br> घ्रातुम् (घ्रा) |
| तव्यत् – | डयितव्यम् (डीङ्) <br> जनितव्यम् (जन्) <br> खादितव्यम् (खाद्) | घ्रातव्यम् (घ्रा) <br> स्थातव्यम् (ष्ठा) <br> द्रष्टव्यम् (दृश्) |
| तृच् – | पूजयिता (पूज्) <br> भविता (भू) <br> स्पर्धिता (स्पर्ध्) | द्रष्टा (दृश्) <br> दोग्धा (दुह्) <br> हन्ता (हन्) |
| | ↓ <br> इडागमस्य प्राप्तिः | ↓ <br> इडागमस्य अप्राप्तिः |

का व्यवस्था अत्र ?

इडागमविषयप्रवेशात् पूर्वं तत्सम्बद्धाः प्राथमिकाः केचन अंशाः ज्ञातव्याः । ते च – धातुः, आर्धधातुकम्, सार्वधातुकम् इत्यादयः । धातुषु अपि सेटः अनिटः वेटः इति त्रिधा । आर्धधातुकेषु अपि इडागमार्हाः इडागमानर्हाः इति द्विधा । आदौ एतादृशान् अंशान् मनसि आकलय्य ततः वयं प्रविशाम इडागमप्रपञ्चम् ।



## १.१. धातवः

भूवादयः क्रियावाचिनः धातवः इति उच्यन्ते । *'भूवादयो धातवः'* इति सूत्रम् । तिङन्तानां कृदन्तानां प्रकृतिः एव 'धातुः' नाम । एते धातवः सन्ति – १९४३ । पाठभेदात् धातुसङ्ख्यायाम् अल्पः भेदः दृश्यते । तथापि 'उपद्विसहस्राः धातवः' इति तु सामान्योक्तिः ।

धातुपाठे पठितान् अतिरिच्य सन्, क्यच्, काम्यच्, क्यष्, क्यङ्, क्विप्, णिङ्, ईयङ्, णिच्, यक्, आय्, यङ् इत्येतेषां द्वादशानां प्रत्ययानां योजनात् अपि धातवः निर्मिताः भवन्ति । एते प्रत्ययान्ताः (सनाद्यन्ताः) धातवः ।

## १.२. आर्धधातुक–सार्वधातुकसंज्ञा

प्रत्ययाः द्विविधाः – प्रातिपदिकेभ्यः विहिताः, धातुभ्यः विहिताः चेति । ये 'धातोः' इति विहिताः ते एव अर्धधातुकसंज्ञां सार्वधातुकसंज्ञां वा लभन्ते, न तु प्रातिपदिकेभ्यः विहिताः ।*

## १.२.१. सार्वधातुकम्

*'तिङशित्सार्वधातुकम्'* – *(३.४.११३)* [तिङः शितश्च धात्वधिकारोक्ताः एतत्संज्ञाः स्युः ।] सार्वधातुकम् इति काचित्

---

* इदमत्र ज्ञेयं यत् अष्टाध्याय्यां तृतीये चतुर्थे पञ्चमे च अध्याये प्रत्ययाः विहिताः । चतुर्थे पञ्चमे च अध्याये विहिताः तु न धातोः । अतः न तत्र आर्धधातुक-सार्वधातुकचिन्ता । तृतीयाध्याये तु केचन प्रत्ययाः धातुभ्यः विहिताः, पुनः केचन प्रातिपदिकेभ्यः । अतः तृतीयाध्याये ये धातुभ्यः विहिताः (न तु प्रातिपदिकेभ्यः) तेषाम् एव आर्धधातुकसंज्ञा सार्वधातुकसंज्ञा वा भवितुम् अर्हति ।

संज्ञा। धात्वधिकारे उक्ताः तिङ्प्रत्ययाः शित्प्रत्ययाः च एतां संज्ञां प्राप्नुवन्ति।

तिङ्प्रत्ययाः तावत् ज्ञाताः एव। *'तिप्तस्झि.....'* इति सूत्रेण उक्ताः तिबादयः अष्टादश प्रत्ययाः। शकारः यस्मिन् इत्संज्ञकः भवति सः 'शित्'। शित्प्रत्ययाः धातोः विहिताः सप्तदश। ते च - शप्, श्यन्, श्नु, श (विकरणम्), श्नम्, श्ना, शायच्, शानच् (विकरणम्), शतृ, शानच् (कृत्), शानन्, चानश्, खश्, श (कृत्), एश्, शध्यै, शध्यैन् चेति।

एवं च धातोः विहिताः अष्टादश तिङ्प्रत्ययाः, सप्तदश शित्प्रत्ययाः च सार्वधातुकसंज्ञाम् अर्हन्ति।

## १.२.२. आर्धधातुकम्

*'आर्धधातुकं शेषः' (३.४.११४)* [तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्ययः आर्धधातुकसंज्ञः स्यात्।]

सार्वधातुकविवरणावसरे तिङां शितां च स्वरूपं निरूपितं खलु। तेभ्यः अन्ये, 'धातोः' इति विहिताः च प्रत्ययाः आर्धधातुकसंज्ञां प्राप्नुवन्ति।

**अयमत्र सारः**

- यः प्रत्ययः तिङ्भ्यः शिद्भ्यः च अन्यः भवति।
- यश्च 'धातोः' इति (धात्वधिकारे) विहितः,

सः एव आर्धधातुकसंज्ञां प्राप्नोति।



## १.३ धातुभ्यः विहिताः

'धातुभ्यः विहिताः' इति उक्तं खलु ? तत्रापि द्वैविध्यम् अस्ति। धातोः इति विहिताः, धातोः विहिताः चेति।

धातोरिति ये विहिताः ते एव आर्धधातुकसंज्ञां सार्वधातुकसंज्ञां वा लभन्ते, न इतरे। उदाहरणदर्शनात् एतत् स्पष्टं भवेत्।

**१. सन्** - *'गुप्तिज्किद्भ्यः सन्' (३.१.४)* इति सूत्रेण विहितः सन्प्रत्ययः यद्यपि धातोः सम्बध्यते, किन्तु न सः धातोरिति विहितः। अतः तस्य आर्धधातुकसंज्ञा सार्वधातुकसंज्ञा वा न भवति।

*'धातोः कर्मणः समानकर्तृकादिच्छायां वा'* (३.१.७) इत्यनेन सूत्रेण सन्प्रत्ययः धातोरिति विहितः। अतः तस्य आर्धधातुकसंज्ञा।

**२. णिङ्** - *'पुच्छभाण्डचीवराण्णिङ्' (३.१.२०)* इति सूत्रेण णिङ् तु सुबन्तेभ्यः विहितः। अतः तस्य सार्वधातुकसंज्ञा आर्धधातुकसंज्ञा वा नास्ति।

*'कमेर्णिङ्' (३.१.३०)* इति सूत्रेण णिङ्प्रत्ययः धातोरिति विहितः। अतः तस्य आर्धधातुकसंज्ञा।

**३. क्विप्** - *'आचारेऽवगल्भक्लीबहोढेभ्यः क्विब्वा वक्तव्यः'* इति वार्तिकेन क्विप् सुबन्तेभ्यः विहितः। अतः तस्य न सार्वधातुकसंज्ञा, न वा आर्धधातुकसंज्ञा। *'सत्सूद्विषद्रुहदुहयज.....उपसर्गेऽपि क्विप्'* इति सूत्रेण क्विप्प्रत्ययः धातोरिति विहितः। अतः तस्य आर्धधातुकसंज्ञा।

**४. णिच्** - *'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्'* (३.१.२१) इति सूत्रेण णिच्प्रत्ययः सुबन्तेभ्यः विहितः । *'तत्करोति तदाचष्टे'* इति गणसूत्रेण विहितः णिच् अपि तादृशः एव । अतः तस्य न सार्वधातुकसंज्ञा, न वा आर्धधातुकसंज्ञा ।

*'सत्यापपाशरूपवीणा... चुरादिभ्यो णिच्'* (३.१.२५) इति सूत्रेण चुरादिभ्यः यदा णिच् विधीयते तदा तु आर्धधातुकसंज्ञा । (तेनैव सूत्रेण सत्याप-पाश-रूपादिभ्यः सुबन्तेभ्यः विहितस्य तु णिचः न आर्धधातुकसंज्ञा, न वा सार्वधातुकसंज्ञा ।)

एवं च सिद्धं यत् यत्र 'धातोः' इति प्रत्ययः विहितः, तत्रैव आर्धधातुक-सार्वधातुकसंज्ञाचिन्ता । किन्तु यत्र सूत्रे 'धातोः' इति शब्दस्य प्रयोगः न, तस्यैव पदस्य अनुवृत्तिः अपि न, तादृशेन सूत्रेण विहितस्य प्रत्ययस्य न आर्धधातुक-संज्ञा, न वा सार्वधातुकसंज्ञा । यत्र तु प्रत्ययः सुबन्तेभ्यः विहितः तस्य तु आर्धधातुकसंज्ञा सार्वधातुकसंज्ञा वा सर्वथा न भवति ।

## १.४ धातुषु सेटः अनिटः च, प्रत्ययेषु इडनुकूलता अननुकूलता च

धातुषु भागद्वयं - सेटः अनिटः चेति । (केचन वेटः अपि भवन्ति ।) प्रत्ययेषु अपि भागद्वयम् - इडनुकूलाः इडननुकूलाः चेति । धातोः इडागमः तदा एव भवति - यदा च धातुः सेट् स्यात्



प्रत्ययश्च इडनुकूलः भवेत् । यदि धातुः अनिट् भवति (सेट् न भवति) तर्हि प्रत्ययः इडनुकूलः चेदपि इट् न भवति । एवमेव प्रत्ययः इडननुकूलः चेत् सेटः अपि धातोः परस्य प्रत्ययस्य इट् न भवति । यत्र च धातुः अनिट्, प्रत्ययश्च इडनुकूलः न, तत्र तु इट् न भवति इति तु स्वयंवेद्यम् ।

एतदेव चित्ररूपेण प्रदर्श्यते यथा -

**सेट्धातुः** < अनुकूलः प्रत्ययः - इट् भवति ।
अननुकूलः प्रत्ययः - इट् न भवति ।

**अनिट्धातुः** < अनुकूलः प्रत्ययः - इट् न भवति ।
अननुकूलः प्रत्ययः - इट् न भवति ।

एतस्यैव उदाहरणानि यथा -

१. सेट्धातुः + अनुकूलः प्रत्ययः -
'पठ्'धातुः सेट् । 'क्त'प्रत्ययः इडनुकूलः । अतः 'पठितः' (पठ् + क्त) इत्यत्र इडागमः भवति ।

२. सेट्धातुः + अननुकूलः प्रत्ययः -
'पठ्'धातुः सेट् । 'अनीयर्'प्रत्ययः इडनुकूलः न । अतः 'पठनीयः' (पठ् + अनीयर्) इत्यत्र इडागमः न भवति ।

३. अनिट्धातुः + अनुकूलः प्रत्ययः -
'कृ'धातुः अनिट् । 'क्त'प्रत्ययः इडनुकूलः । तथापि धातोः अनिट्त्वात् 'कृतः (कृ + क्त)' इत्यत्र इडागमः न भवति ।

४. अनिट् धातुः + अननुकूलः प्रत्ययः -
'कृ'धातुः अनिट् । 'अनीयर्'प्रत्ययः इडनुकूलः न । तस्मात् 'करणीयम्' (कृ + अनीयर्) इत्यत्र इडागमः न भवति ।



## द्वितीयः अध्यायः

# सेटः अनिटश्च धातवः

एवं च स्पष्टं यत् इडागमव्यवस्था ज्ञातव्या चेत् अस्माभिः धातोः सेडनिड्व्यवस्था, प्रत्ययानाम् इडनुकूलताननुकूलता च अवश्यं ज्ञातव्या इति ।

अतः वयं धातोः सेडनिड्व्यवस्थाम् आदौ जानीयाम ।

### २.१ एकाचः अनुदात्ताः च

*'एकाच उपदेशेऽनुदात्तात्' (७.२.१०)* [उपदेशावस्थायां यः धातुः एकाच् भवति, अनुदात्तश्च भवति सः अनिट् भवति ।] इति तु अनिट्त्वविधायकं सूत्रम् । एतस्मिन् सूत्रे स्थितस्य 'एकाच्' इत्यस्य पदस्य 'अनुदात्त'पदस्य च अर्थः स्पष्टतया आदौ अवगन्तव्यः ।

यस्मिन् धातौ एकः एव अच् भवति सः 'एकाच्' इति उच्यते । यथा - पठ्, लिख् इत्यादयः ।

वस्तुतः पाणिनीयः धातुपाठः भवति -

पठ - (व्यक्तायां वाचि),
लिख - (अक्षरविन्यासे) इत्येवम् ।

'पठ' इत्यत्र ठकारोत्तरस्य अकारस्य 'इत्' इति संज्ञा । इत्संज्ञकानां च निवृत्तिः भवति । (एषः एव अनुबन्धलोपो नाम ।) तस्मात् 'पठ्' इति अवशेषः । एकाच्त्वनिर्णयावसरे अनुबन्धलोप-युक्तः एव धातुः ग्रहीतव्यः । तन्नाम अनुबन्धलोपानन्तरं यः भागः शिष्यते तत्र कियन्तः अचः (स्वराः) सन्ति इति दृष्ट्वा एकाच्त्वं निर्णेतव्यम् ।

डुपचष् (पाके) इत्यत्र 'डु' इत्यस्य, अन्त्यस्य 'ष्' इत्यस्य, चकारोत्तरस्य अकारस्य च इत्संज्ञा । अतः शिष्टं रूपं तु 'पच्' इति । सः एकाच् ।

धातुपाठे आ भ्वादिगणात् आक्र्यादिगणं जागृ, ऊर्णु, दरिद्रा, चकास्, दीधी, वेवी, चिरि, जिरि इत्येते अष्ट एव धातवः अनेकाचः । अन्ये सर्वे एकाचः एव ।

चुरादिगणीयाः सर्वे सेटः एव भवन्ति । तेषु ये एकाचः सन्ति तेषां तु अनिट्त्वं न उक्तम् । णिजन्तरूपस्य धातुपाठे अश्रवणात् एव इण्निषेधाभावः । कथादयः तु स्वभावतः एव अनेकाचः । अनेकाचः च सेटः । अतः चुरादिगणीयानां सर्वेषां सेट्त्वं सिद्धं भवति ।

एकाच्धातुषु अपि ये अनुदात्ताः भवन्ति ते एव अनिटः ।

एकाचः धातवः दर्शनमात्रेण अभिज्ञातुं शक्याः । किन्तु अनुदात्ताः धातवः दर्शनमात्रेण न अभिज्ञायन्ते । कौमुद्याम् अपि (बालमनोरमायां) लिख्यते - *'पाणिनिपठितानाम् अनुदात्तधातूनां तदानीन्तनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञानं सम्भवति'* इति ।

प्राचीनैः श्लोकरूपेण अनुदात्तधातवः सङ्गृहीताः । ते स्मर्तव्याः ।

## २.२. अजन्ताः अनिटः

एकाच्धातुषु अजन्ताः हलन्ताः चेति भागद्वयम् । अजन्ताः अनुदात्ताः अधोनिर्दिष्टाः । (सिद्धान्तकौमुद्याम् उक्तः श्लोकः अयम् ।) एते सर्वे अनिटः भवन्ति इति स्मर्तव्यम् ।



**ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।**
**वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥**

[ऊदन्तैः ऋदन्तैः च विना, यौत्यादिभिः विना, वृङ्वृञ्भ्यां च विना अन्ये ये एकाचः अजन्ताः धातवः सन्ति ते सर्वे अनिटः । (निहताः = अनुदात्ताः)]

एतस्य श्लोकस्य सूत्राणां च तात्पर्यम् धत्वन्तक्रमेण परिचिनुयाम -

१. **आकारान्ताः** - आकारान्ताः एकाचः सर्वे धातवः अनिटः एव । यथा - पाता (पा), घ्राता (घ्रा)...

२. **इकारान्ताः** - श्वि, श्रि इत्येताभ्यां विना सर्वे इकारान्ताः एकाचः धातवः अनिटः । (श्विश्रिधातू तु सेटौ)
यथा - जेता (जि), चेता (चिञ्)

३. **ईकारान्ताः** - शीङ्-डीङ्धातुभ्यां विना अन्ये सर्वे ईकारान्ताः एकाचः धातवः अनिटः । (शीङ्डीङ्धातू सेटौ)
यथा - नेता (णीञ्), क्रेता (क्रीञ्)

४. **उकारान्ताः** - स्नु, नु, क्षु, यु, रु, क्ष्णु इत्येतान् धातून् विहाय अन्ये सर्वे उकारान्ताः एकाचः धातवः अनिटः ।

---

काशिकायां सङ्ग्रहश्लोकः एवमस्ति -
अनिट् स्वरान्तो भवतीति दृश्यताम् ।
इमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ
श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चिताः (ततो हलन्तानपि सन्निबोधत) ॥

(स्नुप्रभृतयः षट् सेटः)
यथा - होता (हु), श्रोता (श्रु)

**५. ऊकारान्ताः** - सू धू इत्येतौ धातू विकल्पेन इडागमं प्राप्नुतः। अन्ये सर्वे ऊकारान्ताः एकाचः सेटः एव।
उदा - भविता (भू), पविता (पूञ्)

**६. ऋकारान्ताः** - वृङ्वृञ्धातू सेटौ। स्वृधातुः वेट्। अन्ये सर्वे ऋकारान्ताः एकाचः अनिटः एव।
उदा - कर्ता (कृञ्), हर्ता (हृञ्)

**७. ॠकारान्ताः** - ॠकारान्ताः एकाचः धातवः सर्वे सेटः एव। अनिटः अत्र न सन्ति।

**८. एजन्ताः** - एजन्ताः सर्वे धातवः *'आदेच उपदेशेऽशिति'* *(६.१.४५)* इति सूत्रेण आकारान्तत्वं प्राप्नुवन्ति। आकारान्ताः एकाचः धातवः सर्वे अनिटः इति पूर्वम् उक्तम् एव।
उदा - गाता (गै), ध्याता (ध्यै)



**अयमत्र सारः**

एकाक्षु अजन्तेषु -
- ✦ इकारान्तौ - श्रि, श्रि (२)
- ✦ ईकारान्तौ - शीङ्, डीङ् (२)
- ✦ उकारान्ताः - ष्णु, णु, क्षु, यु, रु, क्ष्णु (६)
- ✦ ऋकारान्तौ - वृङ्, वृञ् (२)

इत्येते द्वादश* धातवः, सर्वे ऊदन्ताः, ॠदन्ताः च धातवः सेटः।
- केचन धातवः विकल्पेन इटं प्राप्नुवन्ति। ते वेटः। तद्विषये अग्रे वक्ष्यते।
- सेड्भ्यः वेड्भ्यः च अन्ये सर्वे अनिटः।

---

* १. (टु) (ओ) श्वि-गतिवृद्ध्योः - श्वयति (श्वयिता)
२. श्रिञ्-सेवायाम् - श्रयति/ते (श्रयिता)
३. शीङ्-स्वप्ने - शेते (शयिता)
४. डीङ्-विहायसा गतौ - डयते (डयिता)
५. ष्णु-प्रस्रवणे - स्नौति (स्नविता)
६. णु-स्तुतौ - नौति (नविता)
७. (टु) क्षु-शब्दे - क्षौति (क्षविता)
८. यु-मिश्रणे - यौति (यविता)
९. रु-शब्दे (रौति) / रुङ्-गतिरेषणयोः - रवते (रविता)
१०. क्ष्णु-तेजने - क्ष्णौति (क्ष्णविता)
११. वृङ्-सम्भक्तौ - वृणीते (वरिता)
१२. वृञ्-वरणे - वृणोति/ते (वरिता)

हलन्तेषु अनिटः धातवः बहवः सन्ति । अन्तक्रमेण ते अत्र निर्दिश्यन्ते -

## २. ३ हलन्तेषु अनिटः धातवः

कान्तः - शक् (१)
चान्तः - पच्, मुच्, रिच्, वच्, विच्, सिच् (६)
छान्तः - प्रच्छ् (१)
जान्तः - त्यज्, निजिर्, भज्, भञ्ज्, भुज्, भ्रस्ज्, मस्ज्, यज्, युज्, रुज्, रञ्ज्, विजिर्, स्वञ्ज्, सञ्ज्, सृज् (१५)
दान्तः - अद्, क्षुद्, खिद्, छिद्, तुद्, नुद्, पद्, भिद्, विद्, विन्द्, शद्, सद्, स्विद्, स्कन्द्, हद् (१५)
धान्तः - क्रुध्, क्षुध्, बुध्, बन्ध्, युध्, रुध्, राध्, व्यध्, शुध्, साध्, सिध् (११)
नान्तः - मन्, हन् (२)
पान्तः - आप्, क्षिप्, छुप्, तप्, तिप्, तृप्, दृप्, लिप्, लुप्, वप्, शप्, स्वप्, सृप् (१३)
भान्तः - यभ्, रभ्, लभ् (३)
मान्तः - गम्, नम्, यम्, रम् (४)
शान्तः - क्रुश्, दंश्, दिश्, दृश्, मृश्, रिश्, रुश्, लिश्, विश्, स्पृश् (१०)
षान्तः - कृष्, त्विष्, तुष्, द्विष्, दुष्, पुष्, पिष्, विष्, शिष्, शुष्, श्लिष् (११)
सान्तः - घस्, वस् (२)
हान्तः - दह्, दिह्, दुह्, नह्, मिह्, रुह्, लिह्, वह् (८)



एवं हलन्तेषु १०२ अनुदात्ताः धातवः एकाचः । अतः तावन्तः अनिटः इत्यर्थः । (विस्तरार्थं तृतीयं परिशिष्टं द्रष्टव्यम् ।)

## वेटः

केचन धातवः विकल्पेन इडागमं प्राप्नुवन्ति । ते च वेटः इति उच्यन्ते । ३६ धातवः वेटः । ते च -

❑ स्वरत्यादयः (३+२)

स्वरति - स्वृ-शब्दोपतापयोः (स्वर्ता/स्वरिता)
सूति - षूङ्-प्राणिगर्भविमोचने (सोता/सविता)
सूयति - षूङ्-प्रतिप्रसवे (सोता/सविता)
धुनोति - धूञ्-कम्पने (स्वादिः) (धोता/धविता)
धुनाति - धूञ्-कम्पने (क्र्यादिः) (धोता/धविता)
(सूत्रम् - स्वरतिसूतिसूयतिधूञूदितो वा - ७.२.४४)

❑ ऊदितः धातवः (२४)

अक्षू, तक्षू, त्वक्षू, गृहू, मृजू, अशू, वृहू, तृन्हू, क्षमू, क्लिदू, अञ्जू, क्लिशू, षिधू, त्रपूष्, क्षमूष्, गाहू, गुहू, स्यन्दू, कृपू, गुपू, ओव्रश्चू, तृहू, स्तृहू, तञ्चू ।

❑ रधादयः (८)

✤ रध्, नश्, तृप्, हप्, द्रुह्, मुह्, स्निह्, स्नुह्
(सू - रधादिभ्यश्च - ७.२.४५)

❑ निर् + कुष् (१) (सू - निरः कुषः - ७.२.४६)

## तृतीयः अध्यायः

# प्रत्ययान् अवलम्ब्य इड्व्यवस्था

धातुः सेट् वेट् वा भवति चेदपि प्रत्ययः अनुकूलः चेदेव इडागमः भवति, न अन्यथा इति वयं ज्ञातवन्तः एव ।

अनुकूलाः प्रत्ययाः, अननुकूलाः प्रत्ययाः च के इति इदानीं जानीयाम ।

इडागमः कृत्सु अपि भवति, तिङ्क्षु अपि भवति । एतस्मिन् लघुपुस्तके कृत्सम्बन्धिनी इडागमव्यवस्था विविच्यते । अतः तिङ्सम्बद्धा एषा व्यवस्था इह न प्रपञ्च्यते ।

कृताम् औत्सर्गिकीं व्यवस्थाम् आदौ जानीयाम ।

### ३.१ औत्सर्गिकी व्यवस्था

ये आर्धधातुकप्रत्ययाः वलादयः भवन्ति (येषाम् आदौ वल्-प्रत्याहारगताः[1] वर्णाः भवन्ति ते) इडागमं प्राप्नुवन्ति इति वदति *'आर्धधातुकस्य इड् वलादेः'* (७.२.३५) इति सूत्रम् । एतत् तु इड्विधायकं सामान्यसूत्रम् । किन्तु ये कृत्प्रत्ययाः वशादयः भवन्ति (येषां कृत्प्रत्ययानाम् आदौ [2]वश्प्रत्याहारगताः वर्णाः भवन्ति ते) ते इडागमं न प्राप्नुवन्ति इति ज्ञापयति *'नेड् वशि कृति'* (७.२.८) इति सूत्रम् ।[3]

---

१. यकारात् भिन्नानि सर्वाणि व्यञ्जनानि 'वल्'प्रत्याहारे अन्तर्भवन्ति ।

२. वर्गाणां तृतीयचतुर्थपञ्चमाः रलवाश्च 'वश्'प्रत्याहारे अन्तर्भवन्ति ।

३. *तितुत्रतथसिसुसरकसेषु च* (७.२.९) इति सूत्रेणापि इडागमः निषिध्यते । तितुत्रादिषु कृत्प्रत्ययाः न अन्तर्भूताः इत्यतः तत् सूत्रम् अत्र न प्रपञ्चितम् ।

एतयोः उभयोः सूत्रयोः तात्पर्यम् इत्थं भवति -

**क्त-क्तवतू, क्त्वा, तुमुन्, तव्य, तव्यत्, तृच्, तृन् इत्येते प्रसिद्धाः कृत्प्रत्ययाः (तास्, तवै, तवेन्, तोसुन्, त्वन्, तवेङ् इत्येते अप्रसिद्धाः षट् कृतः, क्वसुः च) इडागमं प्राप्नुवन्ति ।**

सेटां धातुनां पुरतः स्थिताः एव एते क्तक्तवत्वादयः प्रत्ययाः इडागमं प्राप्नुवन्ति, न तु अनिटां धातूनां पुरतः स्थिताः अपि इति तु स्मर्तव्यम् ।

उदा - ● पठ् + क्त्वा = पठित्वा
लिख् + क्त्वा = लिखित्वा
क्रीड् + क्त्वा = क्रीडित्वा
] धातोः सेट्त्वात् इडागमः ।

● कृ + क्त्वा = कृत्वा
ज्ञा + क्त्वा = ज्ञात्वा
श्रु + क्त्वा = श्रुत्वा
] धातोः अनिट्त्वात् न इडागमः ।

क्तक्तवत्वादिभ्यः भिन्नाः प्रत्ययाः सेटां धातूनां पुरतः तिष्ठन्ति चेदपि इडागमः न भवति । यथा -

● डीङ् + अनीयर् = डयनीयम्

● प्र + ऊह् + ल्यप् = प्रोह्य

● क्रीड् + शतृ = क्रीडन्



**अयमत्र सारः**

**इडर्हाः प्रत्ययाः**

- **तिङ्सम्बद्धाः**
  - **लिट्सम्बद्धाः** → थल्, व, म, से, ध्वे, वहे, महे (७)
  - **अन्ये** → सिच्, सीयुट्, सन्, क्से, से, सेन्, स्य, सिप् (८)
- **कृतः**
  - **प्रसिद्धाः** → क्त, क्तवतु, क्त्वा, तुमुन्, तव्य, तव्यत्, तृच्, तृन् (८)
  - **अन्ये** → तास्, तवै, तवेन्, तवेङ्, तोसुन्, त्वन्, क्वसु (७)

संहत्य (७+८+८+७) ३० प्रत्ययाः

## ३.२ विशेषव्यवस्था

औत्सर्गिकी इड्व्यवस्था अस्माभिः अवलोकिता । इतः परं क्त-क्तवत्वादीन् प्रत्ययान् अवलम्ब्य स्थितां विशेषव्यवस्थां क्रमेण परिशीलयाम ।

### ३.२.१ तृच् / तृन्

सेट्धातूनां पुरतः तृच्प्रत्ययः यदा भवति तदा तस्य इडागमः भवति इति तु औत्सर्गिकः नियमः । इष, सह, लुभ, रुष, रिष इत्येतेषां धातूनां पुरतः यदा तृच् भवति तदा तु तस्य इडागमः विकल्पेन ।

*(सू - तीषसहलुभरुषरिषः - ७.२.४८)*

उदा -

● इष् - एष्टा / एषिता
सह् - सोढा / सहिता

लुभ् - लोब्धा / लोभिता
रुष् - रोष्टा / रोषिता
रिष् - रेष्टा / रेषिता

यत्र विकल्पः तत्रापि इटः प्राप्तिः तु अस्ति एव । अतः एतत् तु स्पष्टं यत् सेट्धातूनां पुरतः तृच्प्रत्ययः यदा भवति तदा तस्य इडागमः भवति इति ।

## ३.२.२ तुमुन्

सेट्धातूनां पुरतः तुमुन्प्रत्ययः यदा भवति तदा इडागमः भवति औत्सर्गिकतया । तृचि यथा तथैव इष, सह, लुभ, रुष, रिष इत्येतेषां धातूनां पुरतः यदा तुमुन् भवति तदा तु इडागमः विकल्पेन ।

*(सू - तीषसहलुभरुषरिषः - ७.२.४८)*

उदा - एष्टुम् / एषितुम् (इष्)
सोढुम् / सहितुम् (षह)
लोब्धुम् / लोभितुम् (लुभ्)
रोष्टुम् / रोषितुम् (रुष्)
रेष्टुम् / रेषितुम् (रिष्)

## ३.२.३ तव्यत् / तव्य

सेट्धातूनां पुरतः तव्यत्प्रत्ययः (तव्यप्रत्ययः वा) यदा परः भवति तदा पूर्ववदेव इडागमः औत्सर्गिकः । इष्, सह्, लुभ्, रुष्, रिष् इत्येतेषां पुरतः यदा तव्यत् (तव्य वा) भवति तदा तु इडागमः विकल्पेन ।



उदा - एष्टव्यम् / एषितव्यम् (इष)
सोढव्यम् / सहितव्यम् (सह)
लोब्धव्यम् / लोभितव्यम् (लुभ)
रोष्टव्यम् / रोषितव्यम् (रुष)
रेष्टव्यम् / रेषितव्यम् (रिष)

## ३.२.४ क्त्वा

तुमुन्तव्यदादीनां यथा, तथा क्त्वाप्रत्ययसम्बन्धिनी इड्व्यवस्था सरला नास्ति । अतः अजन्तानां हलन्तानां च धातूनां व्यवस्था पार्थक्येन निरूप्यते अत्र ।

### ३.२.४.१ अजन्तेभ्यः परस्य -

सेट्धातूनां पुरतः यदा क्त्वाप्रत्ययः भवति तदा इडागमः भवति इत्यस्य औत्सर्गिकनियमस्य अपवादः *'श्र्युकः किति'* (७.२.११) इति सूत्रम् । 'श्रिधातोः परस्य, उगन्तात् (उकारान्ताः, ऊकारान्ताः, ऋकारान्ताः, ॠकारान्ताः च उगन्ताः । उक् इति प्रत्याहारः) धातोः परस्य च क्त्वाप्रत्ययस्य इट् न' इति तस्य सूत्रस्य तात्पर्यम् ।

*'जॄव्रश्च्योः क्त्वि'* (७.२.५५) इति सूत्रेण जॄव्रश्च्योः परस्य क्त्वाप्रत्ययस्य इट् विधीयते विशेषेण । पूङ्धातोः परस्य क्त्वाप्रत्ययस्य विकल्पेन इट् भवति ।

*[सू - पूङश्च (७.२.५१)]*

तस्मात् अजन्ते उत्सर्ग-निषेध-विशेषाणां सारः एवं भवति -

- श्रि, डीङ्, शीङ्, जॄ - इत्येतेभ्यः चतुर्भ्यः धातुभ्यः परस्य क्त्वाप्रत्ययस्य नित्यम् इट् स्यात् ।

  यथा - श्रि - श्रयित्वा, डीङ् - डयित्वा
  शीङ् - शयित्वा, जॄ - जरित्वा

- पूङ्धातोः परस्य क्त्वाप्रत्ययस्य विकल्पेन इट् ।

  उदा - पूङ् - पूत्वा / पवित्वा

- एतेभ्यः पञ्चभ्यः (४ + १) अन्ये ये अजन्ताः धातवः सन्ति तेभ्यः परस्य क्त्वाप्रत्ययस्य इट् न भवति ।

  यथा - ज्ञा - ज्ञात्वा, श्रि - श्रित्वा
  नी - नीत्वा, श्रु - श्रुत्वा
  भू - भूत्वा, कृ - कृत्वा
  तॄ - तीर्त्वा, ध्यै - ध्यात्वा



**अयमत्र सारः**

**अजन्तेभ्यः परस्य क्त्वाप्रत्ययस्य इट्**

| नित्यम् | विकल्पेन | न भवति |
|---|---|---|
| श्रि, डीङ्, शीङ्, जॄ (४) | पूङ् (१) | एतेभ्यः पञ्चभ्यः अन्ये |

### ३.२.४.२ हलन्तेभ्यः परस्य -

हलन्तेभ्यः धातुभ्यः परस्य क्त्वाप्रत्ययस्य इडागमः यः भवति तत्सम्बद्धाः द्वित्राः विशेषनियमाः सन्ति । तेभ्यः ऋते अन्यत्र औत्सर्गिकः नियमः प्रवर्तते ।

ते विशेषाः यथा -

**१. नित्यम् -**

- अञ्चित्वा - ( पूजार्थे[1] वेटः नित्यम्)
- व्रश्चित्वा[2] - (वेटः नित्यम्)
- उषित्वा / क्षुधित्वा[3] - (अनिटः नित्यम्)

---

१. *अञ्चेः पूजायाम् (७.२.५३)* - पूजार्थे अञ्चधातोः परस्य क्त्वाप्रत्ययस्य इडागमः भवति । 'उदितो वा' इति प्राप्तं वैकल्पिकम् इडागमं बाधित्वा नित्यम् इडागमं विधत्ते एतत् सूत्रम् ।

२. *जॄव्रश्च्योः क्त्वि (७.२.५५)* - ऊदित्त्वात् वेटः अपि व्रश्चधातोः क्त्वायां नित्यम् इडागमः एतेन सूत्रेण ।

३. *वसतिक्षुधोरिट् (७.२.५२)* - वसधातुः क्षुधधातुः च वस्तुतः अनिटौ । तथापि तयोः परस्य क्त्वाप्रत्ययस्य इट् विधीयते अनेन सूत्रेण ।

**२. विकल्पेन -**

(अ) ◆ क्लिष्ट्वा - क्लिशित्वा[४]
◆ लुभित्वा / लोभित्वा[५,६] - लुब्ध्वा

(आ) येषु धातुषु उकारः इत्संज्ञकः ते उदितः । उदिद्भ्यः धातुभ्यः परस्य क्त्वाप्रत्ययस्य विकल्पेन इडागमः *'उदितो वा' (७.२.५६)* इति सूत्रेण ।

उदितः धातवः ९४ सन्ति । ते च -

श्रम्भु ष्टुभु षृभु षृम्भु षिभु षिम्भु छमु कमु जमु जिमु
क्षिवु क्षेवु ग्रसु ग्लसु जिषु विषु मिषु श्रिषु श्लिषु प्रुषु
प्लुषु पृषु वृषु मृषु शसु शंसु स्यमु अञ्चु खनु हृषु
धृषु शासु चमु दम्भु भ्रंशु यसु शमु तमु दमु श्रमु
भ्रमु क्लमु षिधु ष्णसु क्नसु ष्णुसु असु जसु तसु दसु
वसु भृशु ऋधु गृधु तञ्चु तनु षणु क्षणु क्षिणु ऋणु
तृणु घृणु वनु मनु म्रुञ्चु म्रुचु म्लुचु म्लुञ्चु ग्रुचु ग्लुचु
ग्लुञ्चु कुजु खुजु वृतु वृधु शृधु मृधु धावु स्रंसु ध्वंसु
भ्रंसु भ्रंशु स्रंसु रमु क्रमु दिवु पृथु ष्ठिवु वञ्चु तञ्चु
त्वञ्चु षिवु स्त्रिवु ।

---

४. *क्लिशः क्त्वानिष्ठयोः (७.२.५०)* - क्लिशधातोः परस्य क्त्वाप्रत्ययस्य क्त-क्तवत्वोश्च विकल्पेन इडागमः ।

५. *लुभोऽविमोहने (७.२.५४)* - गृधाभिन्नार्थकस्य लुभधातोः परस्य क्त्वाप्रत्ययस्य विकल्पेन इडागमः । (लुभित्वा /लोभित्वा) गृधार्थे तु न इट् । (लुब्ध्वा)

६. 'रलोः व्युपदाद्धलादेः संश्च' (१..२.२६) इति क्त्वाप्रत्ययस्य विकल्पेन कित्त्वात् गुणेन तदभावेन च द्वे रूपे ।



एतेषाम् उदाहरणानि यथा -

शंसु - शंसित्वा / शस्त्वा
शासु - शासित्वा / शिष्ट्वा
वृधु - वर्धित्वा / वृद्ध्वा
वृतु - वर्तित्वा / वृत्त्वा

एतदतिरिच्य स्थितानां सेटां धातूनां पुरतः यदा क्त्वाप्रत्ययः भवति तदा तस्य औत्सर्गिकः इडागमः भवति ।

यथा - चर्व - चर्वित्वा
चिति - चिन्तयित्वा
कपि - कम्पित्वा
डीङ् - डयित्वा

## ३.२.५ क्तः / क्तवतुः

क्तक्तवतुप्रत्ययसम्बद्धा इड्व्यवस्था किञ्चिदिव कठिना एव अस्ति । अतः एतां व्यवस्थाम् अजन्तधातुसम्बद्धां हलन्तधातुसम्बद्धां च पार्थक्येन एव परिशीलयाम -

क्तप्रत्ययः क्तवतुप्रत्ययः च निष्ठाशब्देन निर्दिश्यते । [सु - *क्तक्तवतू निष्ठा - (१.१.२६)* निरूपणस्य आनुकूल्याय अत्रापि तौ निष्ठाशब्देन एव निर्दिश्येते ।]

### ३.२.५.१ अजन्तधातुसम्बद्धा व्यवस्था

क्त्वाप्रत्यये इव अस्ति व्यवस्था अत्रापि । तन्नाम उत्सर्गनियमः, *'श्र्युकः किति'* इति सूत्रेणास्य निषेधः, *'पूङश्च'* इति सूत्रेण इटः विकल्पेन विधानं च अत्रापि अस्ति ।

अतः एतस्य सर्वस्य सारः एवं भवति -

- नित्यम् इडागमः - अजन्तेषु शीङः परस्य निष्ठाप्रत्ययस्य इडागमः । उदा - शयितः / शयितवान्
- विकल्पेन इडागमः - पूङः परस्य निष्ठाप्रत्ययस्य विकल्पेन इडागमः भवति ।

  उदा - पूतः / पवितः, पूतवान् / पवितवान्
- एतयोः अन्येभ्यः अजन्तेभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति । उदाहरणानि यथा -

  ज्ञा - ज्ञातः, ज्ञातवान्  श्रि - श्रितः, श्रितवान्

  नी - नीतः, नीतवान्  श्रु - श्रुतः, श्रुतवान्



भू - भूतः, भूतवान्  कृ - कृतः, कृतवान्

तॄ - तीर्णः, तीर्णवान्  ध्यै - ध्यातः, ध्यातवान्

### ३.२.५.२ हलन्तधातुसम्बद्धा व्यवस्था

हलन्तेभ्यः परस्य निष्ठाप्रत्ययस्य इडागमव्यवस्था किञ्चिदिव कठिना विस्तृता च । *'यस्य विभाषा'* इति सूत्रेण विशिष्टा निषेधव्यवस्था अपि उक्ता । अतः क्रमेण एतां व्यवस्थाम् अवगन्तुं प्रयासं करवाम ।

#### ३.२.५.२.१ नित्यम्

(अ) वसुधातुः क्षुधधातुः च अनिटौ । तथापि निष्ठाप्रत्यये परे तयोः सेट्त्वम् । तन्नाम तयोः परस्य निष्ठाप्रत्ययस्य इडागमः

भवति । (सु - वसतिक्षुधोरिट् - ७.२.५२)

उदा - वस् - उषितः - उषितवान्

क्षुध् - क्षुधितः - क्षुधितवान्

**(आ)** पतितः / पतितवान्

*द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः* (२.१.२४) इति सूत्रे 'पतितः' इत्यस्य प्रयोगात् निष्ठायां तस्य सेट्त्वं बोध्यम् । [*'तनिपतिदरिद्राणाम् उपसंख्यानम्'* इति वार्तिकेन सनि इडागमस्य वैकल्पिकत्वात् *'यस्य विभाषा'* इति सूत्रं यद्यपि निष्ठायाम् इडागमं निरुणद्धि, तथापि सूत्रप्रयोगात् तस्य निष्ठायां सेट्त्वम् अङ्गीक्रियते ।]

### ३.२.५.२.२ विकल्पेन

i) क्लिश्धातोः परस्य निष्ठाप्रत्ययस्य विकल्पेन इट् भवति । [सु - *क्लिशः क्त्वानिष्ठयोः (७.२.५०)]*

उदा - क्लिष्टः / क्लिशितः

क्लिष्टवान् / क्लिशितवान्

ii) दमु - उपशमे स्पश - बाधने

शमु - उपशमे छद - अपवारणे

पूरी - आप्यायने ज्ञपि - मारणतोषणनिशामनेषु

दसु - उपक्षये

इत्येतेभ्यः सप्तभ्यः ण्यन्तेभ्यः धातुभ्यः परः निष्ठाप्रत्ययः विकल्पेन इडागमं प्राप्नोति ।

(सु - *वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः - ७.२.२७)*

उदा - दमु + णिच् + क्त - दान्तः / दमितः

शमु + णिच् + क्त - शान्तः / शमितः



पूरी + णिच् + क्त - पूर्णः / पूरितः

दस् + णिच् + क्त - दस्तः / दसितः

स्पश + णिच् + क्त - स्पष्टः / स्पशितः

छद +णिच् + क्त - छन्नः / छादितः

ज्ञप् + णिच् + क्त - ज्ञप्तः / ज्ञापितः

iii) रुष-रोषे, अम-गत्यादिषु, (ञि)त्वरा-सम्भ्रमे, सं + घुषिर्-अविशब्दने, आ + स्वन-मनोभिधाने - इत्येतेभ्यः धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः विकल्पेन भवति ।

*(सू - रुष्यमत्वरसंघुषास्वनाम् - ७.२.२८)*

उदा - रुष - रुषितः / रुष्टः

अम - अभ्यमितः / अभ्यान्तः

त्वरा - त्वरितः / तूर्णः

सं + घुष् - संघुषितः / संघुष्टः

आ + स्वन् - आस्वनितः / आस्वान्तः

iv) भावे *(नंपुसके भावे क्तः)* आदिकर्मणि च *(आदिकर्मणि क्तः कर्तरि च)* च विद्यमानेभ्यः आदिद्धातुभ्यः* परः निष्ठाप्रत्ययः विकल्पेन इडागमं प्राप्नोति ।

*(सू - विभाषा भावादिकर्मणोः - ७.२.१७)*

---

* येषु धातुषु आकारः इत्संज्ञकः भवति ते 'आदितः' इति उच्यन्ते । आदितः धातवः सन्ति चतुर्दश ।

ते च -

ञिष्विदा, हुर्छा, मुर्च्छा, स्फूर्च्छा, टुओस्फूर्जा, ञिफला, ञिमिदा, श्विता, ञित्वरा, ष्विदा, ञितृषा, ञिमिदा, ञिक्ष्विदा, ञिधृषा

उदा – प्रस्वेदितः, प्रस्वेदितवान्, प्रस्वेदितम्
प्रमेदितः, प्रमेदितवान्, प्रमेदितम्

### ३.२.५.२.३ अर्थभेदेन विकल्पः

अर्थविशेषे विद्यमानेभ्यः केभ्यश्चित् धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः भवति । ते च धातवः, विशेषार्थाः, उदाहरणानि च अधः दर्शितानि सन्ति । विशेषार्थभिन्नेषु अर्थेषु विद्यमानाः निष्ठान्ताः ते धातवः इडागमं न प्राप्नुवन्ति ।

| इट्सहितं रूपम् | धातुः | विशेषार्थः | उदाहरणम् | अन्यार्थे रूपम् |
|---|---|---|---|---|
| १) अञ्चितः | अञ्चू-गतिपूजनयोः | पूजार्थः | अञ्चिता अस्य गुरवः | अक्तः |
| २) लुभितः | लुभ-विमोहने | विमोहनम् (आकुलीकरणम्) | विलुभिताः केशाः | लुब्धः |
| ३) शकितः | शक्लृ-शक्तौ | कर्मार्थः | शकितः घटः कर्तुम् | शक्तः |
| ४) असितम् | असु-क्षेपणे | भावार्थः | असितम् अनेन | अस्तम् |

१) अञ्चेः पूजायाम् - ७.२.५३

२) लुभो विमाहने - ७.२.५४

३) सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन ।

४) सौनागाः अस्यतेर्भावे निष्ठायां विकल्पेन इटमिच्छन्ति ।

- काशिका (७.२.१७)



| | | | | |
|---|---|---|---|---|
| ५) क्षुभितम् | क्षुभ-सञ्चलने | अमन्थार्थः | क्षुभितं मन्थेन | क्षुब्धम् |
| ६) स्वनितः | स्वन-शब्दे | मनोभिन्नार्थः | स्वनितो मृदङ्गः | स्वान्तम् |
| ७) ध्वनितः | ध्वन-शब्दे | तमोभिन्नार्थः | ध्वनितो मृदङ्गः | ध्वान्तम् |
| ८) लगितम् | लगे-सङ्गे | असक्तार्थः | लगितम् | लग्नम् |
| ९) म्लेच्छितम् | म्लेच्छ-अव्यक्ते शब्दे | अस्पष्टार्थभिन्नः | म्लेच्छितं वचनम् | म्लिष्टम |
| १०) विरेभितम् | वि+रेभृ-शब्दे | स्वरभिन्नार्थः | विरेभितं तेन | विरिब्धम् |
| ११) फणितम् | फण-गतौ | अनायासभिन्नार्थः | फणितं कषायम् | फाण्टम् |
| १२) बाहितम् | बाहृ-प्रयत्ने | अभृशार्थः | बाहितम् अनेन | बाढम् |
| १३) धर्षितः | ञिधृषा-प्रागल्भ्ये | धृष्टताभिन्नार्थः | धर्षिता महिला | धृष्टः |
| १४) विशसितः | शसु-हिंसायाम् | धृष्टताभिन्नार्थः | विशसितः दुष्टः | विशस्तः |
| १५) दृहितम्/दृंहितम् | दृह दृहि-वृद्धौ | स्थूलबलभिन्नार्थः | दृहितः पुरुषः | दृढः |
| १६) परिवृंहितम् | परि+वृह-वृहि वृद्धौ | प्रभुभिन्नार्थः | परिवृंहितं तेन । | परिवृढः |

५-१२) क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु - ७.२.१८

१३-१४) धृषिशसी वैयात्ये - ७.२.१९

१५) दृढः स्थूलबलयोः - ७.२.२०

१६) प्रभौ परिवृढः - ७.२.२१

| १७) कषितम्<br>१८) घुषितम् | कष-हिंसायाम्<br>घुषिर्-अविशब्दने | कृच्छ्रगहनभिन्नार्थः<br>विशब्दनभिन्नार्थः<br>(शब्देनप्रकटीकृतम्) | कषितं सुवर्णम्<br>घुषित वाक्यम् | कष्टम्<br>घुष्टः |
|---|---|---|---|---|
| १९) अर्दितः | अर्द-गतौ याचने च | सं,नि,वि-उपसर्गैः<br>रहितः | | समर्णः |
| २०) अभ्यर्दितः<br>२१) वर्तितम्<br>२२) हृषितः/<br>हृष्टः<br>२३) अपचितः/<br>अपचायितः | अर्द-गतौ याचने च<br>वृतु-वर्तने(णिच्)<br>हृष-अलीके<br>हृष्ट-तुष्टौ<br>अप+चायृ- पूजा-<br>निशामनयोः | आविदूर्यभिन्नार्थः<br>अध्ययनभिन्नार्थः<br>लोमार्थे<br><br>अप-उपसर्गयोगे | अभ्यर्दितो वृषलः<br>वर्तिता रज्जुः वृत्तम्<br>हृषितं/हृष्टं रोम<br>हृषितः/ हृष्टः मैत्रः<br>अपचायितः<br>अनेन गुरुः | अभ्यर्णा<br><br>हृष्टम् (नेट्)<br>हृषितम् (सेट्)<br>अपचितः |

१७) कृच्छ्रगहनयोः कषः - ७.२.२२
१८) घुषिरविशब्दने - ७.२.२३
१९) अर्देः सन्निविभ्यः - ७.२.२४
२०) अभेश्चाविदूर्ये - ७.२.२५
२१) णेरध्ययने वृत्तम् - ७.२.२६
२२) हृषेर्लोमसु - ७.२.२९
२३) अपचितश्च - ७.२.३०

* (वैदिकप्रयोगसम्बद्धानि ह्रुह्वरेश्छन्दसि, अपरिह्वृताश्च, ग्रसितस्कभित... इत्यादीनि सूत्राणि अत्र न व्याख्यातानि ।)



### ३.२.५.३ इण्निषेधः

सेटां धातूनां पुरतः स्थितस्य निष्ठाप्रत्ययस्य इडागमः भवेत् औत्सर्गिकतया । किन्तु सेटाम् अपि केषाञ्चित् धातूनाम् अनिट्त्वं विहितं निष्ठायाम् ।

तच्च अनिट्त्वं द्विधा विधीयते - साक्षात्, 'यस्य विभाषा' इत्यनेन सूत्रेण चेति ।

### ३.२.५.३.१ 'साक्षात्'विधानम्

- येषु धातुषु 'आ'कारः इत्संज्ञकः भवति ते उच्यन्ते आदितः इति । ते च चतुर्दश । (पश्यत - पृ.सं. - २९) तेभ्यः परस्य निष्ठाप्रत्ययस्य इट् न भवति । तन्नाम तस्य इडागमः न ।
  *(सू - आदितश्च - ७.२.१६)*
  उदा - ञिष्विदा - स्विन्नः / स्विन्नवान्
- येषु धातुषु ईकारः इत्संज्ञकः भवति ते धातवः उच्यन्ते ईदितः इति । ईदिद्भ्यः धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति ।
  *(सू - श्वीदितो निष्ठायाम् - ७.२.१४)*
  ईदितः धातवः एते -
  ह्लादी यती चिती भृजी उच्छी कटी कनी जभी ऊयी पूयी क्नूयी क्ष्मायी उर्वी तुर्वी थुर्वी दुर्वी धर्वी गुर्वी मुर्वी स्फायी वृजी पृची ऋषी दृभी चृती कृती ओविजी गुरी धुरी जूरी शूरी चूरी मसी उन्दी कृती ओप्यायी पृची वृजी छृदी दृभी पूरी गदी मदी ञिइन्धी जनी दीपी तृरी घूरी
  उदा - यती - यत्तः / यत्तवान्

ओविजी - उद्विग्नः / उद्विग्नवान्

दीपी - दीप्तः / दीप्तवान्

### ३.२.५.३.२ 'यस्य विभाषा' इत्यस्य आधारेण विधानम्

*'यस्य विभाषा' (७.२.१५)* इत्येतत् किञ्चन विशेषसूत्रम् ।

तस्य तात्पर्यं तु -

केनचित् वा सूत्रेण यदि कस्माच्चित् धातोः परस्य कस्यचित् प्रत्ययस्य इडागमः यदि विकल्पेन उक्तः स्यात् तर्हि तस्य धातोः निष्ठायाम् इडागमः न भवति ।

एतस्य सूत्रस्य बलात् ये अनिटः भवन्ति ते उच्यन्ते -

(१) स्वृ - शब्दोपतापयोः (भ्वादिः) - स्वरति

षूङ् - प्राणिगर्भविमोचने (अदादिः) - सूते

षूङ् - प्राणिप्रसवे (दिवादिः) - सूयते

धूञ् - कम्पने (स्वादिः) - धुनोति

धूञ् - कम्पने (क्र्यादिः) - धुनाति

इत्येतेभ्यः धातुभ्यः ऊदिद्भ्यः* (पश्यत - पृ.सं.-१५) धातुभ्यः च परस्य निष्ठाप्रत्ययस्य इडागमः न भवति । यतः *'स्वरतिसूतिसूयतिधूञूदितो वा' (७.२.४४)* इति सूत्रेण विकल्पेन इटः विधानात् ।

उदा - स्वृ - स्वृतः, स्वृतवान्

सु - सूतः, सूतवान्

धू - धूतः, धूतवान्

* येषु धातुषु ऊकारः (दीर्घः ऊ) इत्संज्ञकः भवति ते धातवः ऊदितः इति कथ्यन्ते ।



गुहू - गूढः, गूढवान्

(२) गुपू (रक्षणे) धातुः आयादेशं प्राप्नोति - *'गुपूधूपविच्छिपणिपनिभ्यः आयः' (३.१.२८)* इति सूत्रेण । आयादेश-रहितस्य तस्य धातोः इडागमः न भवति - *'आयादयः आर्धधातुके वा' (३.१.३१)* इति सूत्रेण आर्धधातुकविवक्षायाम् आयादेशस्य विकल्पेन विधानात् । (आयादेशे सति, 'गोपाय' इत्यस्य उपदेशे (धातुपाठे) अपाठात् तस्मात् परस्य इण्निषेधो न । अतः गोपायितः / गोपायितवान् इति रूपम् ।)

अयादेशाभावपक्षे तु 'गुप्' इत्यस्य ऊदित्त्वात् अन्यत्र विकल्पः इत्यतः निष्ठायां निषेधः ।

उदा - गुप्तः / गुप्तवान्

(३) इष् - इच्छायाम् (इच्छति)

षह् - मर्षणे (सहते)

लुभ् - गार्ध्ये (लुभ्यति), लुभ - विमोहने (लुभति)

रुष् - हिंसायाम् (रोषति, रुष्यति)

रिष् - हिंसायाम् (रेषति, रिष्यति)

इत्येतेभ्यः पञ्चभ्यः धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'तीषसहलुभरुषरिषः' (७.२.८८)* इति सूत्रेण तकारादौ आर्धधातुके परे विकल्पेन इडागमस्य विहितत्वात् ।

उदा - इष् - इष्टः, इष्टवान्

सह् - सोढः, सोढवान्

लुभ् - लुब्धः, लुब्धवान्

रुष् - रुष्टः, रुष्टवान्

रिष् - रिष्टः, रिष्टवान्

(४) दिव्, ष्ठिव्, सिव्, स्त्रिव् इत्यादयः इवन्ताः (येषाम् अन्ते इव् अस्ति ते इवन्ताः) ऋधु, दम्भु, ज्ञप्, सन् इत्येतेभ्यः धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'सनीवन्तर्धभ्रस्ज-दम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्'* (७.२,४१) इति सूत्रेण सनि इडागमस्य विकल्पेन विधानात्।
(एतदत्र स्मर्तव्यम् - स्वृ, यु, ऊर्णु, भृ इत्येते उगन्ताः। अतः 'श्र्युकः किति' इत्यनेन इडागमनिषेधः। भ्रस्ज्धातोः अनिट्ता 'एकाचः...' इति सूत्रेण। अतः एव 'सनीवन्त....' इति सूत्रे श्रिस्वृप्रभृतीनाम् अन्तर्भावे सत्यपि विवरणावसरे अत्र ते न उपात्ताः।)
उदा - दिव् -द्यूनः, द्यूनवान् सिव् - स्यूनः, स्यूनवान्
ज्ञप् - ज्ञप्तः, ज्ञप्तवान् सन् - सातः, सातवान्

(५) निर्-उपसर्गसहितस्य कुषधातोः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'निरः कुषः'* (७.२.४६) इति सूत्रेण विकल्पेन इटः विधानात्।
उदा - निष्कुष्टः, निष्कुष्टवान्

(६) येषु धातुषु उकारः इत्संज्ञकः भवति सः 'उदित्' इति उच्यते। एतादृशेभ्यः उदिद्भ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'उदितो वा'* (७.२.५६) इति सूत्रेण क्त्वायां विकल्पेन इटः विधानात्।
उदा - शमु - शान्तः, शान्तवान्
दमु - दान्तः, दान्तवान्
वृषु - वृष्टः, वृष्टवान्



असु - अस्तः, अस्तवान्

(७) कृत्, चृत्, छृद्, तृद्, नृत् इत्येतेभ्यः पञ्चभ्यः धातुभ्यः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'सेऽसिचि कृतचृतच्छृद-तृदनृतः'* (७.२.५७) इति सूत्रेण सादिप्रत्ययस्य विकल्पेन इटः विधानात्।
उदा - कृत् - कृत्तः, कृत्तवान्, चृत् - चृत्तः, चृत्तवान्
छृत् - छृत्तः, छृत्तवान् तृत् - तृत्तः, तृत्तवान्
नृत् - नृत्तः, नृत्तवान्

(८) विद्ल्-लाभे - वित्तः, वित्तवान्
लाभार्थकस्य विद्धातोः परस्य निष्ठाप्रत्ययस्य इडागमः न भवति - *'विभाषा गमहनविदविशाम्'* (७.२.६५) इति सूत्रेण तुदादिगणीयस्य विदधातोः परस्य निष्ठाप्रत्ययस्य इटः निषेधात्। [*'विभाषा गमहन...'* इति सूत्रे गमहनविशधातवः अन्तर्भूताः सन्ति, तथापि ते अनिटः एव इत्यतः विवरणावसरे ते न उपात्ताः अत्र।
विद्धातवः चत्वारः अदादिगणीयः, दिवादिगणीयः, तुदादिगणीयः, रुधादिगणीयः चेति। 'विभाषा गमहन...' इति सूत्रेण च तुदादिगणीयस्य एव अनिट्त्वं विहितम्। दिवादिगणीयः तु अनिट् एव। अदादि-रुधादिगणीयौ सेटौ।]

एतेभ्यः अपवादेभ्यः अन्यत्र औत्सर्गिकम् इडागमनियमम् अवलम्ब्य इट् करणीयः।

**अयमत्र सारः**

**हलन्तधातुभ्यः परस्य निष्ठाप्रत्ययस्य इड्व्यवस्था**

नित्यम्
- वसतिक्षुधोः
- पततेः

विकल्पेन
- क्लिशः,
- दान्तशान्तादीनाम्
- रुष्यमत्वरादीनाम्

अर्थविशेषे
- अञ्चुप्रभृतीनाम्

न भवति

साक्षात् विधानम्
- आदिताम्
- ईदिताम्

'यस्य विभाषा' इत्यस्य आधारेण
- स्वरत्यादीनाम्
- ऊदितः
- इषसहादीनाम्
- दिवादीनाम्
- निरः कुषः
- उदिताम्
- कृतादीनाम्
- विदः लाभार्थकस्य

❑❑❑



## परिशिष्टम् - १

# स्मरणाय सङ्ग्रहोऽयम्

**अनिटः धातवः**

- अजन्तेषु श्विश्रिप्रभृतिभ्यः द्वादशभ्यः अन्ये, ऊदन्तेभ्यः ॠदन्तेभ्यः च अन्ये, स्वरत्यादिभ्यः ३६ वेट्धातुभ्यः अन्ये च धातवः अनिटः ।
- हलन्तेषु परिगणिताः १०२ धातवः अनिटः ।

**इडागमः - औत्सर्गिकः**

क्त-क्तवतू, क्त्वा, तुमुन्, तव्य, तव्यत्, तृच्, तृन् इत्येते अष्टौ प्रसिद्धाः कृत्प्रत्ययाः (तासादयः सप्त अप्रसिद्धाः कृतः च) इडागमम् अर्हन्ति ।

**इडागमः - विशेषः**

- तृचि - तृचि परे सर्वे सेटः धातवः इडागमं प्राप्नुवन्ति एव । क्वचित् विकल्पेन ।
- तुमुनि - तुमुनि परे सर्वे सेटः धातवः इडागमं प्राप्नुवन्ति एव । इषादयः पञ्च तु विकल्पेन ।
- तव्यति (तव्ये च) - तव्यति तव्ये च परे सर्वे सेटः धातवः इटं प्राप्नुवन्ति । इषादयः पञ्च विकल्पेन ।
- क्त्वायाम् - क्त्वाप्रत्यये परे सेट्सु अजन्तधातुषु श्वि, डीङ्, शीङ्, जॄ इत्येते धातवः नित्यम् इटं प्राप्नुवन्ति । (पूङः विकल्पेन) अन्येभ्यः इट् न । क्त्वाप्रत्यये परे सेट्सु

हलन्तेभ्यः सर्वेभ्यः इटि कृते न दोषः ।

क्तक्तवतूप्रत्यययोः परयोः अधोनिर्दिष्टाः श्लोकाः स्मर्तव्याः -

इष्टसोढौ तुष्टरुष्टौ रिष्टो वित्तो निरः कुषः ।
ऋद्धदब्धौ ज्ञप्तसातौ इवन्ता द्यून आदयः ।।
कृत्तवृत्तौ छत्ततृत्तौ नृत्तो गुप्तस्तथोदितः ।
अनिडन्ताः स्मृता 'यस्य विभाषा'सूत्रकारणात् ।
आदितश्चेदितः साक्षात् निष्ठायाम् अनिटः स्मृताः ।।

---

तृचि तुमुनि तव्यति क्त्वायां च स्थितायाः इड्व्यवस्थायाः स्मरणार्थम् एतासां पङ्क्तीनां स्मरणं लाभाय स्यात् -

इट् स्यात् सेटां हि सर्वेषां तुमुनि तृचि तव्यति ।
क्त्वायां श्विडीङौ शीङ्जृवौ व्रश्चिरञ्चिर्वसक्षुधौ ।
सेटः सर्वे हलन्ताश्च इटमर्हन्ति वै ध्रुवम् ।।



## परिशिष्टम् - २

# इड्व्यवस्थासम्बद्धानि सूत्राणि

इड्व्यवस्थासम्बन्धीनि सर्वाणि सूत्राणि पाणिनिना सप्तमस्य अध्यायस्य द्वितीये पादे सङ्गृहीतानि । विषयस्य अवगमनस्य दृष्ट्या आनुकूल्यं भवतु इति उद्देशेन तानि क्रमेण दीयन्ते अत्र ।

## सप्तमाध्यायस्य द्वितीयः पादः

८. नेड्वशि कृति ।
९. तितुत्रतथसिसुसरकसेषु च ।
१०. एकाच उपदेशेऽनुदात्तात् ।
११. श्र्युकः किति ।
१२. सनिग्रहगुहोश्च ।
१३. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।
१४. श्वीदितो निष्ठायाम् ।
१५. यस्य विभाषा ।
१६. आदितश्च ।
१७. विभाषा भावादिकर्मणोः ।
१८. क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु ।
१९. धृषिशसी वैयात्ये ।
२०. दृढः स्थूलबलयोः ।
२१. प्रभौ परिवृढः ।
२२. कृच्छ्रगहनयोः कषः ।
२३. घुषिरविशब्दने ।
२४. अर्देः सन्निविभ्यः ।
२५. अभेश्चाविदूर्ये ।
२६. णेरध्ययने वृत्तम् ।
२७. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।
२८. रुष्यमत्वरसंघुषास्वनाम् ।
२९. हृषेर्लोमसु ।
३०. अपचितश्च ।
३१. ह्व ह्वरेश्छन्दसि ।
३२. अपरिह्वृताश्च ।
३३. सोमे ह्वरितः ।
३४. ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च ।
३५. आर्धधातुकस्येड् वलादेः ।

३६. स्नुक्रमोरनात्मनेपद-निमित्ते ।
३७. ग्रहोऽलिटि दीर्घः ।
३८. वृतो वा ।
३९. न लिङि ।
४०. सिचि च परस्मैपदेषु ।
४१. इट् सनि वा ।
४२. लिङ्सिचोरात्मनेपदेषु ।
४३. ऋतश्च संयोगादेः ।
४४. स्वरतिसूतिसूयतिधूञूदितो वा ।
४५. रधादिभ्यश्च ।
४६. निरः कुषः ।
४७. इण्निष्ठायाम् ।
४८. तीषसहलुभरुषरिषः ।
४९. सनीवन्तर्धभ्रस्जदम्भुश्रि-स्वृयूर्णुभरज्ञपिसनाम् ।
५०. क्लिशः क्त्वानिष्ठयोः
५१. पूङश्च ।
५२. वसतिक्षुधोरिट् ।
५३. अञ्चेः पूजायाम् ।
५४. लुभो विमोहने ।
५५. जॄव्रश्च्योः क्त्वि ।
५६. उदितो वा ।
५७. सेऽसिचि कृतचृतच्छृत-तृदनृतः ।
५८. गमेरिट् परस्मैपदेषु ।
५९. न वृद्भ्यश्चतुर्भ्यः ।
६०. तासि च क्लृपः ।
६१. अचस्तास्वत्थल्यनिटो नित्यम् ।
६२. उपदेशेऽत्वतः ।
६३. ऋतो भारद्वाजस्य ।
६४. बभूथाततन्थजगृभ्म-ववर्थेति निगमे ।
६५. विभाषा सृजिदृशोः ।
६६. इडत्यर्त्तिव्ययतीनाम् ।
६७. वस्वेकाजाद्धसाम् ।
६८. विभाषा गमहनविद-विशाम् ।
६९. सनिंससनिवांसम् ।
७०. ऋद्धनोः स्ये ।
७१. अञ्जेः सिचि ।
७२. स्तुसुधूञ्भ्यः परस्मैपदेषु ।
७३. यमरमनमातां सक्च ।
७४. स्मिपूङ्रञ्ज्वशां सनि ।
७५. किरश्च पञ्चभ्यः ।

०००



## परिशिष्टम् - ३

# हलन्तेषु अनिड्धातुसङ्ग्रहः

हलन्तेषु अनिटः धातवः चतुर्दशे (१४) पृष्ठे ये उक्ताः तेषां विस्तरः अत्र दीयते ।

अनिटः धातवः श्लोकरूपेण वैयाकरणसिद्धान्तकौमुद्यां काशिकायां च सङ्गृहीताः दृश्यन्ते । अभ्यासिनाम् आनुकूल्याय उभयविधः अपि पाठः अत्र दीयते । अजन्तसम्बद्धौ उभयविधौ अपि श्लोकौ पूर्वम् उक्तौ एव ।

**हलन्तसम्बद्धाः श्लोकाः कौमुद्यां यथा -**

शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छित्यजिनिजिर्भजः ।
भञ्ज्भुज्भ्रस्ज्मस्जियज्युज्रुज्रञ्ज्विजिर्स्वञ्जिसञ्जसृजः ।।
अद्क्षुद्खिद्छिद्तुदनुदः पद्यभिद्विद्यतिर्विनद् ।
शद्सदी स्विद्यति स्कन्दिहदी क्रुध् क्षुधिबुध्यती ।।
बन्धिर्युधिरुधी राधिव्यध्शुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिप्छुपितप्तिपस्तृप्यतिदृप्यती ।।
लिप्लुप्वप्शप्स्वप्सृपियभ्रभ्लभ्गम्नम्यमो रमिः ।
क्रुशिर्दंशिदिशि दृश्मृश्रिश्रुश्लिश्विश्स्पृशः कृषिः ।।
त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्यतयो घसिः ।
वसतिर्दह्दिहिदुहो नह्मिह्रुहलिह्वहिस्तथा ।।
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ।।
तृप्दृपी तौ वारयितुं श्यना निर्देश आदृतः ।
स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ।।

वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
निजिर्विजिर्शिक्लृ इति सानुबन्धा अमी तथा ।।
विन्दतिश्चान्द्रदौर्गादिरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ।।
रञ्जिमस्जी अदिपदी तुदक्षुध्शुषिपुषी शिषिः ।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ।।

**हलन्तसम्बद्धाः श्लोकाः काशिकायां यथा -**

शकिस्तु कान्तेष्वनिडेक इष्यते
घसिश्च सान्तेषु वसिः प्रसारणी ।
रभिस्तु भान्तेष्वथ मैथुने यभिः
ततस्तृतीयो लभिरेव नेतरे ।।

दिहिर्दुहिर्मेहतिरोहती वहिः
नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया
गणेषु हान्ता प्रविभज्य कीर्तिताः ।।

दिशिं दृशिं दशिमथो मृशिं
स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशं च शान्तानिनिटः पुराणगाः
पठन्ति पाठेषु दशैव नेतरान् ।।

रुधिः सराधिर्युधिबन्धिसाधयः
क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः
इमे तु धान्ता दश येऽनिटो मताः
ततः परं सिध्यतिरेव नेतरे ।।



शिषिं पिषिं शुष्यतिपुष्यती त्विषिं
विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ
गणेषु षान्तान् कृषिकर्षती तथा ।।

तपिं तिपिं चापिमथो वपिं स्वपिं
लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं
प्रतीहि पान्तान् पठितांस्त्रयोदश ।।

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन्
शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि
प्रतीहि दान्तान्दश पञ्च चानिटः ।।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ।।

पूर्वोक्ताः धातवः अर्थसहिततया दत्ताः सन्ति अधः । तेषां पुरतः लडन्तं रूपं (प्र.पु.ए.व.) तृजन्तं रूपं च दत्तम् अस्ति ।

**कान्तः** - शक्लृ-शक्तौ - शक्नोति - शक्ता

**चान्ताः** - डुपचष्-पाके - पचति - पक्ता
पचि-व्यक्तीकरणे - पञ्चते - पक्ता
→ उभौ अपि पचि इत्यनेन गृह्येते ।

मुच्-मुञ्चते / मुञ्चति - मोक्ता

रिचिर्-विरेके - रिणक्ति - रेक्ता
रिच-वियोजनसम्पर्चनयोः - रेचति - रेक्ता
→ उभौ अपि रिचि इत्यनेन गृह्येते ।

वच-परिभाषणे - वक्ति - वक्ता
ब्रूञ्-व्यक्तायां वाचि
(वचादेशयुक्तः) - वक्ति - वक्ता
वच-परिभाषणे - वचति - वक्ता
→ वचि इत्येतेन गृह्यन्ते ।

विचिर्-पृथग्भावे - विनक्ति - वेक्ता
षिच-क्षरणे - सिञ्चति - सेक्ता

**छान्तः** - प्रच्छ-ज्ञीप्सायाम् - पृच्छति - प्रष्टा

**जान्ताः** - त्यज-हानौ - त्यजति - त्यक्ता
णिजिर्-शौचपोषणयोः - नेनेक्ति - नेक्ता
भज-सेवायाम् - भजति - भक्ता
भञ्जो-आमर्दने भनक्ति - भङ्क्ते - भङ्क्ता
भुज-पालनाभ्यवहारयोः - भुङ्क्ते - भोक्ता
भुजो-कौटिल्ये - भुजति - भोक्ता
→ भुजि इत्यनेन गृह्येते ।

भ्रस्ज-पाके - भृज्जति - भ्रष्टा
मस्जो-शुद्धौ - मज्जति - मङ्क्ता
यज-देवपूजादिषु - यजति - यष्टा
युजिर्-योगे - युनक्ति - योक्ता
युज-समाधौ - युज्यते - योक्ता
→ युजि इत्यनेन गृह्येते ।

रुजो-भङ्गे - रुजति - रोक्ता
रञ्ज-रागे - रजति - रङ्क्ता
विजिर्-पृथग्भावे - वेवेक्ति - वेक्ता
स्वञ्ज-परिष्वङ्गे - स्वजते - स्वङ्क्ता
षञ्ज-सङ्गे - सजति - सङ्क्ता
सृज-विसर्गे सृजति - स्रष्टा
सृज-विसर्गे - सृज्यते - स्रष्टा
→ सृजि इत्यनेन उभौ अपि गृह्येते ।



**दान्ताः** - अद-भक्षणे - अत्ति - अत्ता
क्षुदिर्-सम्पेषणे - क्षुणत्ति - क्षोत्ता
खिद-दैन्ये - खिद्यते - खेत्ता
खिद-दैन्ये - खिन्ते - खेत्ता
खिद-परिघाते - खिन्दति - खेत्ता
→ खिद इत्यनेन त्रयः अपि गृह्यन्ते ।

छिदिर्-द्वैधीकरणे - छिनत्ति - छेत्ता
तुद-व्यथने - तुदति - तोत्ता
णुद-प्रेरणे - नुदति - नोत्ता
पद-गतौ - पद्यते - पत्ता
भिदिर्-विदारणे - भिनत्ति - भेत्ता
विद-सत्तायाम् - विद्यते - वेत्ता
विद-विचारणे - विन्ते - वेत्ता
शद्लृ-शातने - शीयते - शत्ता
षद्लृ-विशरणगत्यवसादनयोः - सीदति - सत्ता
ञिष्विदा-गात्रप्रक्षरणे - स्विद्यति - स्वेत्ता
स्कन्दिर्-गात्रशोषणयोः - स्कन्दति - स्कन्ता
हद-पुरीषोत्सर्गे - हदति - हत्ता

**धान्ताः** - क्रुध-कोपे - क्रुध्यति - क्रोद्धा
क्षुध-बुभुक्षायाम् - क्षुध्यति - क्षोद्धा
बुध-बोधने - बुध्यते - बोद्धा
बन्ध-बन्धने - बध्नाति - बन्द्धा
युध-सम्प्रहारे - युध्यते - योद्धा
रुधिर्-आवरणे - रुणद्धि - रोद्धा
अनो रुध-कामे - अनुरुध्यते - रोद्धा
→ रुधि इत्यनेन उभौ अपि गृह्येते ।

राधृ-संसिद्धौ - राध्नोति - राद्धा
राध-वृद्धौ - राध्यति - राद्धा
→ राध इत्यनेन उभौ अपि गृह्येते ।

व्यध-ताडने - विध्यति - व्यद्धा
शुध-शौचे - शुध्यति - शोद्धा
साध-संसिद्धौ - साध्नोति - साद्धा
षिधु-संराद्धौ - सिध्यति - सेद्धा

**मान्तौ** - मन-ज्ञाने - मन्यते - मन्ता
हन-हिंसागत्योः - हन्ति - हन्ता

**पान्ताः** - आप्लृ-व्याप्तौ - आप्नोति - आप्ता
क्षिप-प्रेरणे - क्षिपति - क्षेप्ता
क्षिप-प्रेरणे - क्षिप्यति - क्षेप्ता → क्षिप् इत्यनेन उभौ अपि गृह्येते ।
छुप-स्पर्शे - छुपति - छोप्ता
तप-सन्तापे - तपति - तप्ता
तप-ऐश्वर्ये - तप्यते - तप्ता
तप-दाहे (आधृषीयः) - तपति - तप्ता → तपि इत्यनेन त्रयः अपि गृह्यन्ते ।
तिपृ-क्षरणे - तेपते - तेप्ता
तृप-प्रीणने - तृप्यति - तर्प्ता
दृप-हर्षमोहनयोः - दृप्यति - दर्प्ता
लिप-उपदेहे - लिम्पति - लेप्ता
लुप्लृ-छेदने - लुम्पति - लोप्ता
टुवप-बीजतन्तुसन्ताने - वपति - वप्ता
शप-आक्रोशे - शपति - शप्ता
ञिष्वप्-शये - स्वपिति - स्वप्ता
सृप्लृ-गतौ - सर्पति - सर्प्ता

**भान्ताः** - रभ-राभस्ये - रभते - रब्धा
यभ-मैथुने - यभति - यब्धा
डुलभष्-प्राप्तौ - लभते - लब्धा



**मान्ताः** - गम्लृ-गतौ - गच्छति - गन्ता
णम-प्रह्वत्वे शब्दे च - नमति - नन्ता
यम-उपरमे - आयच्छते - यन्ता
रमु-क्रीडायाम् - रमते - रन्ता

**शान्ताः** - क्रुश-आह्वाने रोदने च - क्रोशति - क्रोष्टा
दंश-दशंने - दशति - दंष्टा
दिश-अतिसर्जने - दिशति - देष्टा
दृशिर्-प्रेक्षणे - पश्यति - द्रष्टा
मृश-आमर्शने - मृशति - म्रष्टा
रिश-हिंसायाम् - रिशति - रेष्टा
रुश-हिंसायाम् - रुशति - रोष्टा
लिश-अल्पीभावे - लिशति - लेष्टा
लिश-गतौ - लिशति - लेष्टा → लिश इत्यनेन उभौ अपि गृह्येते ।
विश-प्रवेशने - विशति - वेष्टा
स्पृश-संस्पर्शे - स्पृशति - स्प्रष्टा

षान्ताः - कृष-विलेखने - कृषति - क्रष्टा
कृष-विलेखने - कृषति - क्रष्टा → कृष् इत्यनेन उभौ अपि गृह्येते ।
त्विष-दीप्तौ - त्वेषति - त्वेष्टा
तुष-तुष्टौ - तुष्यति - तोष्टा
द्विष-अप्रीतौ - द्वेष्टि - द्वेष्टा
दुष-वैकृत्ये - दुष्यति - दोष्टा
तुष-तुष्टौ - तुष्यति - तोष्टा
पुष-पुष्टौ - पुष्णाति - पोष्टा
पिष्लृ-सञ्चूर्णने - पिनष्टि - पेष्टा

विष्लृ-व्याप्तौ - वेवेष्टि - वेष्टा
विषु-सेचने - वेषति - वेष्टा
→ विष् इत्यनेन उभौ अपि गृह्येते ।

शिष्लृ-विशेषणे - शिनष्टि - षेष्टा
शिष-हिंसायाम् - शिषति - षेष्टा
→ शिष् इत्यनेन उभौ अपि गृह्येते ।

शुष-शोषणे - शुष्यति - शोष्टा

श्लिष-आलिङ्गने - श्लिष्यति - श्लेष्टा
श्लिषु-दाहे - श्लेषति - श्लेष्टा
→ श्लिष इत्यनेन उभौ अपि गृह्येते ।

**सान्तौ** - घस्लृ-अदने - घसति - घस्ता
वस-निवासे - वसति - वस्ता

**हान्ताः** - दह-भस्मीकरणे - दहति - दग्धा
दिह-उपचये - देग्धि - देग्धा
दुह-प्रपूरणे - दोग्धि - दोग्धा
णह-बन्धने - नह्यति - नद्धा
मिह-सेचने - मेहति - मेढा
रुह-जन्मनि प्रादुर्भावे च - रोहति - रोढा
लिह-आस्वादने - लेढि - लेढा
वह-प्रापणे - वहति - वोढा

[इह प्राधान्येन सिद्धान्तकौमुदीपाठः आदृतः । काशिकापाठस्य कौमुदीपाठस्य च अल्पः भेदः क्वचित् दृश्यते ।]

# अभ्यासाः

*I. तिङ्भिन्नाः शिद्भिन्नाः च वलादयः प्रत्ययाः के इति निर्दिशत ।*
(वल् इति प्रत्याहारः । येषां प्रत्ययानाम् आदौ वल्-प्रत्याहारान्तर्गतः वर्णः भवति ते वलादयः ।)
(१ तव्यत्, २) अनीयर्, ३) क्त, ४) शतृ ५) शानच् ६) तृच् ७) यत्, ८) ति, ९) झि, १०) क्तवतु ११) तुमुन् १२) अच् १३) वस् १४) यक्

**II.** अजन्तेषु श्वि, श्रि, शी, डी, ष्णु, स्नु, नु, क्षु, यु, रु, वृङ्, वृञ् इत्येते द्वादश धातवः, ऊदन्ताः ॠदन्ताः च सेटः । अन्ये सर्वे अजन्ताः अनिटः ।

***उपरितनस्य कोष्टकस्य साहाय्येन अधोनिर्दिष्टाः धातवः सेटः उत अनिटः इति निर्दिशत ।***

उदा - ज्ञा - अवबोधने (जानाति) (अनिट्)
तॄ - प्लवनतरणयोः (तरति) (सेट्)

१. या - प्रापणे (याति) ....................
२. ध्यै - चिन्तायाम् (ध्यायति) ....................

३. धाञ् - धारणपोषणयोः (दधाति) ....................
४. कृञ् - करणे (करोति) ....................
५. डीङ् - विहायसा गतौ (डयते) ....................
६. भू - सत्तायाम् (भवति) ....................
७. घ्रा - गन्धोपादाने (जिघ्रति) ....................
८. जि - जये (जयति) ....................
९. इण् - गतौ (एति) ....................
१०. धेट् - पाने (धयति) ....................
११. भृञ् - भरणे (भरति) ....................
१२. हृञ् - हरणे (हरति) ....................
१३. णीञ् - प्रापणे (नयति) ....................
१४. दाञ् - दाने (ददाति) ....................
१५. चिञ् - चयने (चिनोति) ....................

**III.** कान्त-चान्त-छान्त-नान्त-भान्त-मान्त-सान्त-हान्तेषु अनिटः - शक्, पच्, मुच्, रिच्, वच्, विच्, सिच्, प्रच्छ्, मन्, हन्, यभ्, रभ्, लभ्, गम्, नम्, यम्, रम्, घस्, वस्, दह्, दिह्, दुह्, नह्, मिह्, रुह्, लिह्, वह्,

***कोष्टकस्थम् अंशं मनसि निधाय अधोनिर्दिष्टाः धातवः सेटः उत अनिटः इति निर्दिशत ।***

उदा - अकि - लक्षणे (अङ्कते) सेट्

१. अन - प्राणने (अनति) ....................



२. अम - गतौ (अमति) ....................
३. अस - भुवि (अस्ति) ....................
४. अहि - गतौ (अंहति) ....................
५. डुपचष् - पाके (पचति) ....................
६. दुह - प्रपूरणे (दोग्धि) ....................
७. ईह - चेष्टायाम् (ईहते) ....................
८. वह - प्रापणे (वहति) ....................
९. वच - परिभाषणे (वक्ति) ....................
१०. ऊह - वितर्के (ऊहते) ....................
११. ऋच्छ - गत्यादिषु (ऋच्छति) ....................
१२. क्रमु - पादविक्षेपे (क्राम्यति) ....................
१३. डुलभष् - प्राप्तौ (लभते) ....................
१४. क्षुभ - सञ्चलने (क्षुभ्नाति) ....................
१५. खनु - अवदारणे (खनति) ....................

जान्त-दान्त-धान्तेषु अनिटः -
- त्यज्, निजिर्, भज्, भञ्ज्, भुज्, भ्रस्ज्, भस्ज्, यज्, युज्, रुज्, रञ्ज्, विजिर्, स्वञ्ज्, सञ्ज्, सृज्
- अद्, क्षुद्, खिद्, छिद्, तुद्, नुद्, पद्, भिद्, विद्, विनद्, शद्, सद्, स्विद्, स्कन्द्, हद्
- क्रुध्, क्षुध्, बुध्, बन्ध्, युध्, रुध्, राध्, व्यध्, शुध्, साध्, सिध्

***IV. अधोनिर्दिष्टाः धातवः सेटः उत अनिटः इति निर्दिशत ।***

उदा - त्यज - हानौ (त्यजति) <u>अनिट्</u>

१. खिद - दैन्ये (खिद्यते) ....................

२. युध - सम्प्रहारे (युध्यते) ....................

३. स्पर्ध - सङ्घर्षे (स्पर्धते) ....................

४. स्पदि - किञ्चिच्चलने (स्पन्दते) ....................

५. सृज - विसर्गे (सृजति) ....................

६. ञिष्विदा - गात्रप्रक्षरणे (स्विद्यति) ....................

७. ष्वद - आस्वादने (स्वदते) ....................

८. वद - व्यक्तायां वाचि (वदति) ....................

९. रुदिर् - अश्रुविमोचने (रोदिति) ....................

१०. रुधिर् - आवरणे (रुणद्धि) ....................

***V. अधोनिर्दिष्टाः धातवः सेटः उत अनिटः इति निर्दिशत ।***

पान्त-शान्त-षान्तेषु अनिटः धातवः -

- आप्, क्षिप्, छुप्, तप्, तिप्, तृप्, दृप्, लिप्, लुप्, वप्, शप्, स्वप्, सृप्
- क्रुश्, दंश्, दिश्, दृश्, मृश्, दिश्, रुश्, लिश्, विश्, स्पृश्,
- कृष्, त्विष्, तुष्, द्विष्, दुष्, पुष्, पिष्, विष्, रिष्, शुष्, श्लिष्

उदा - आप्लृ - व्याप्तौ (आप्नोति) <u>अनिट्</u>

१. हृष - तुष्टौ (हृष्यति) ....................



२. जप - व्यक्तायां वाचि मानसे च (जपति) ....................

३. तप - सन्तापे (तपति) ....................

४. तृप - तृप्तौ (तृप्यति) ....................

५. द्विष - अप्रीतौ (द्वेष्टि) ....................

६. पिष्लृ - सञ्चूर्णने (पिनष्टि) ....................

७. प्लुष - दाहे (प्लुष्यति) ....................

८. भष - भर्त्सने (भषति) ....................

९. भूष - अलङ्कारे (भूषति) ....................

१०. भ्रंशु - अधःपतने (भ्रश्यति) ....................

***VI. अधोनिर्दिष्टानां धातूनाम् अनुबन्धरहितं रूपं लिखत -***

उदा - गम्लृ - गतौ (<u>गम्</u>)

१. रुदिर् - अश्रुविमोचने (....................)

२. क्षमूष् - सहने (....................)

३. दृशिर् - प्रेक्षणे (....................)

४. धूञ् - कम्पने (....................)

५. क्वथे - निष्पाके (....................)

६. क्लिदू - आर्द्रीभावे (....................)

७. ओलस्जी - व्रीडायाम् (....................)

८. ओ हाक् - त्यागे (....................)

९. कासृ - दीप्तौ (..........................)

१०. चक्षिङ् - व्यक्तायां वाचि (..........................)

११. छिदिर् - द्वैधीकरणे (..........................)

१२. क्रमु - पादविक्षेपे (..........................)

१३. डुपचष् - पाके (..........................)

१४. दिवु - क्रीडादिषु (..........................)

१५. पत्लृ - गतौ (..........................)

**VII.** ***अधः सेड्धातवः अनिड्धातवः अनुकूलाः प्रत्ययाः, अननुकूलाः प्रत्ययाः च निर्दिष्टाः । 'सेटां धातूनां पुरतः अनुकूलाः प्रत्ययाः भवन्ति चेदेव इटः प्राप्तिः, अन्यथा न' इति तु नियमः । एतस्य आधारेण इट् भवति वा न वा इति निर्दिशत ।***

| सेटः धातवः | अनिटः धातवः | अनुकूलाः प्रत्ययाः | अननुकूलाः प्रत्ययाः |
|---|---|---|---|
| अत, पठ, | आप्लृ, गम | तव्यत् | शतृ |
| ईक्ष, खन, | शक, कृञ् | क्त | शानच् |
| खाद, क्षल, | पच, भज | क्तवतु | अनीयर् |
| ईक्ष, जि, | कृष, तुद | तृच् | ण्यत् |
| कम्प, एध | खिद, क्षिप | तुमुन् | यत् |

१. अत् + तव्यत् [ ]

२. पठ् + क्तवतु [ ]



३. खन् + तृच् [ ]

४. जि + शतृ [ ]

५. एध् + तुमुन् [ ]

६. खाद् + ण्यत् [ ]

७. ईक्ष् + शानच् [ ]

८. पच् + शतृ [ ]

९. खाद् + तव्यत् [ ]

१०. क्षिप् + तुमुन् [ ]

११. क्षल् + अनीयर् [ ]

१२. कृ + तव्यत् [ ]

१३. खाद + क्त [ ]

१४. आप्लृ + तुमुन् [ ]

१५. ईक्ष + तुमुन् [ ]

**VIII. अधोनिर्दिष्टानां धातूनां तृजन्तरूपाणि लिखत -**

| सेटः | अनिटः |
|---|---|
| १. कम्प् → .............. | ११. वच् → .............. |
| २. निन्द → .............. | १२. त्यज् → .............. |
| ३. धाव् → .............. | १३. कृ → .............. |
| ४. तॄ → .............. | १४. गम् → .............. |
| ५. ग्रह → .............. | १५. दृश् → .............. |
| ६. खाद → .............. | १६. कृष् → .............. |
| ७. कुप् → .............. | १७. दुह → .............. |
| ८. ऊह → .............. | १८. छिद् → .............. |
| ९. भू → .............. | १९. प्रच्छ → .............. |
| १०. रुद → .............. | २०. क्षिप → .............. |

**IX. अधोनिर्दिष्टानि तृजन्तरूपाणि शुद्धानि उत अशुद्धानि इति निर्दिशत ।**

| सेटः | अनिटः |
|---|---|
| लिख, भक्ष, राज, रुद, अस् | युध, क्षिप, प्रच्छ, लिह, रम |

१. योधिता (..............) २. भक्षिता (..............)



३. क्षेप्ता (..............) ४. रमिता (..............)

५. प्रच्छिता (..............) ६. राजिता (..............)

७. लेखिता (..............) ८. रोदिता (..............)

९. लेहिता (..............) १०. अस्ता (..............)

**X. अधोनिर्दिष्टेषु यानि शुद्धानि तुमुन्नन्तरूपाणि तानि शुद्धरूपकोष्टके, यानि अशुद्धानि तानि अशुद्धरूपकोष्टके च लिखत ।**

अनिटः धातवः - क्रुश, कृष, आप्लृ, द्विष

क्रोशितुम्, आह्वयितुम्
क्लान्तुम्, कर्षितुम्
जागरितुम्, डयितुम्
द्वेषितुम्, धावितुम्
आप्नोतुम्, शयितुम्
वसितुम्, आशासितुम्

शुद्धानि
१. ..........................
२. ..........................
३. ..........................
४. ..........................
५. ..........................
६. ..........................

अशुद्धानि
१. ..........................
२. ..........................
३. ..........................
४. ..........................
५. ..........................
६. ..........................

***X. सेडनिटाम् आवलीं परिशील्य शुद्धं तव्यदन्तं रूपं रिक्ते स्थले लिखत ।***

| सेटः | नृती, पुष्, अश्, तनु, शीङ् |
|---|---|
| अनिटः | वस, वेञ्, कृष्, क्षिप्, हाक् |

१. वसति - वस्तव्यम् / वसितव्यम् [ ]

२. वयति - वातव्यम् / वयितव्यम् [ ]

३. नृत्यति - नृत्तव्यम् / नर्तितव्यम् [ ]

४. पुष्णाति - पुष्टव्यम् / पोषितव्यम् [ ]

५. अश्नाति - अश्तव्यम् / अशितव्यम् [ ]

६. तनोति - तन्तव्यम् / तनितव्यम् [ ]

७. कृषति - क्रष्टव्यम् / कर्षितव्यम् [ ]

८. क्षिपति - क्षेप्तव्यम् / क्षेपितव्यम् [ ]

९. जहाति - हातव्यम् / जहितव्यम् [ ]

१०. शेते - शेतव्यम् / शयितव्यम् [ ]



***XII. केचन धातवः निष्ठायाम् अर्थविशेषे इटं प्राप्नुवन्ति । तद्भिन्ने अर्थे न इट् (निष्ठायाम्) (विवरणार्थं २७ तमं पुटं पश्यत ।) अधः यत् रूपद्वयं दत्तं तत्र सूचिते अर्थे यत् उचितं रूपं तत् लिखत -***

| रूपम् | धातुः | अर्थः | शुद्धं रूपम् |
|---|---|---|---|
| उदा - १. शकितः/शक्तः | | कर्मार्थे | शकितः |
| २. ध्वनितः/ध्वान्तः | ध्वन-शब्दे | तमोभिन्नार्थः | .......... |
| ३. असितम्/अस्तम् | असु-क्षेपणे | भावभिन्नार्थः | .......... |
| ४. क्षुभितः/क्षुब्धः | क्षुभ-सञ्चलने | अमन्थार्थः | .......... |
| ५. लगितम्/लग्नम् | लगे-सङ्गे | सक्तार्थः | .......... |
| ६. अञ्चितः/अक्तः | अञ्चु - गतिपूजनयोः | अपूजार्थः | .......... |
| ७. स्वनितम्/स्वान्तम् | स्वन-शब्दे | मनोऽर्थे | .......... |
| ८. धर्षितः/धृष्टः | ञि धृषा- प्रागल्भ्ये | धृष्टतार्थे | .......... |
| ९. लुभितः/लुब्धः | लुभ-विमोहने | आकुली-करणार्थे | .......... |
| १०. अर्दितः/न्यर्णः | अर्द-गतौ याचने च | सि,नि,वि-उपसर्ग। रहित। | .......... |

## उत्तराणि

**I.** वलादयः - तव्यत्, क्त, तृच्, क्तवतु, तुमुन् ।

**II.** १. अनिट् २. अनिट् ३. अनिट् ४. अनिट् ५. सेट् ६. सेट् ७. अनिट् ८. अनिट् ९. अनिट् १०. अनिट् ११. अनिट् १२. अनिट् १३. अनिट् १४. अनिट् १५. अनिट् ।

**III.** १. सेट् २. सेट् ३. सेट् ४. सेट् ५. अनिट् ६. अनिट् ७. सेट् ८. अनिट् ९. अनिट् १०. सेट् ११. सेट् १२. सेट् १३. अनिट् १४. सेट् १५. सेट्

**IV.** १. अनिट् २. अनिट् ३. सेट् ४. सेट् ५. अनिट् ६. अनिट् ७. सेट् ८. सेट् ९. सेट् १०. अनिट् ।

**V.** १. सेट् २. सेट् ३. अनिट् ४. अनिट् ५. अनिट् ६. अनिट् ७. सेट् ८. सेट् ९. सेट् १०. सेट् ।

**VI.** १. रुद् २. क्षम् ३. दृश् ४. धू ५. क्रथ् ६. क्लिद् ७. लज् ८. हा ९. कास् १०. चक्ष् ११. छिद् १२ क्रम् १३. पच् १४. दिव् १५. पत् ।

**VII.** १. अतितव्यम् २. पठितवान् ३. खनिता ४. जयन् ५. एधितुम् ६. खाद्यम् ७. ईक्षमाणः ८. पचन् ९. खादितव्यम् १०. क्षेप्तुम् ११. क्षालनीयम् १२. कर्तव्यम् १३. खादितः १४. आप्तुम् १५. ईक्षितुम्

**VIII.** १. कम्पिता २. निन्दिता ३. धाविता ४. तरिता ५. ग्रहीता ६. खादिता ७. कोपिता ८. ऊहिता ९. भविता १०. रोदिता ११. वक्ता १२. त्यक्ता १३. कर्ता १४. गन्ता १५. द्रष्टा १६. क्रष्टा १७. दोग्धा १८. छेत्ता १९. प्रष्टा २०. क्षेप्ता ।

**IX.** १. अशुद्धम् २. शुद्धम् ३. अशुद्धम् ४. शुद्धम् ५. अशुद्धम् ६. शुद्धम् ७. अशुद्धम् ८. शुद्धम् ९. शुद्धम् १०. अशद्धम् ।

**X.** १. जागरितुम् २. डयितुम् ३. धावितुम् ४. वसितुम् ५. आशीसतुम् ६. शयितुम् ।

शुद्धानि - १. जागरितुम् २. डयितुम् ३. धावितुम् ४. वसितुम् ५. आशासितुम् ६. शयितुम्

अशुद्धानि - १. क्रोशितुम् २. आह्वयितुम् ३. क्लान्तुम् ४. कर्षितुम् ५. द्वेषितुम् ६. आप्नोतुम् ।

**XI.** १. वस्तव्यम् २. वातव्यम् ३. नर्तितव्यम् ४. पोषितव्यम् । ५. अशितव्यम् ६. तनितव्यम् ७. क्रष्टव्यम् ८. क्षेप्तव्यम् ९. हातव्यम् १०. शयितव्यम्

**XII.** २. ध्वनितः ३. अस्तम् ४. क्षुभितम् ५. लग्नम् ६. अक्तः ७. स्वान्तम् ८. धृष्टः ९. लुभितः १०. अर्दितः ।

- ❖ व्यवहारसाहस्री (कन्नड/आंग्ल/हिन्दी-आवृत्तिः), अभ्यासपुस्तकम्, विभक्तिवल्लरी, शतृशानजन्तमञ्जरी, अभ्यासदर्शिनी, सम्भाषणसोपानम्, कालबोधिनी, णत्वणिजन्तम्, सन्देशसंस्कृतम्, गुणनकोष्टकम्, संस्कृतसुलेखावली, बालकेन्द्रम्, सन्धिः, समासः, कारकम्, बालतोषिणी, ललितबोधिनी, शुद्धिकौमुदी, कौशलबोधिनी, भाषापाकः इत्यादीनि **शैक्षणिकपुस्तकानि**। (बालकेन्द्रं सान्द्रमुद्रिकारूपेणापि उपलभ्यते)
- ❖ कन्नडसंस्कृतकोषः, हिन्दीसंस्कृतकोषः, आंग्लसंस्कृतकोषः, कन्नड-संस्कृतक्रियापदकोषः, संस्कृतचित्रपदकोषः इत्यादयः **शब्दकोषाः**।
- ❖ नवरूपकम्, जागरूको भव, कविकोपकलापः इत्यादयः **रूपकसङ्ग्रहाः**।
- ❖ गीतसंस्कृतम्, गेयसंस्कृतम्, शिशुसंस्कृतम् इत्यादीनि **गीतपुस्तकानि**।
- ❖ सुगन्धः, पञ्चतन्त्रकथाः, शृण्वन्तु कथामेकाम्, प्रेरणादीपः इत्यादयः **कथासङ्ग्रहाः**।
- ❖ सुभाषितरसः, संस्कारसुधा, बाळदीविगे, मातृचेतन, मित्राय नमः इत्यादीनि **संस्कारदायकानि पुस्तकानि**। (कन्नडभाषया)
- ❖ धर्मश्रीः, सार्थः, अपश्चिमः पश्चिमे, ऋणविमुक्तिः, बाबासाहेब-आप्टे (व्यक्तिपरिचयः), भुवमानीता भगवद्भाषा, इत्यादयः **दीर्घकथाग्रन्थाः**।
- ❖ सङ्क्रमणम्, ज्ञाने धर्मः उत प्रयोगे, इदमित्थम्, ज्ञानदीप्तिः, परिवर्तनम्, पूर्णाङ्कं प्रति, संस्कृतभारती, उत्तिष्ठत मा स्वप्त, सप्तदशी, परिष्कारः इत्यादयः **वैचारिककृतयः**।
- ❖ रसायनशास्त्रम्, भौतशास्त्रम्, आयुर्वेदः इत्यादीन् विषयान् अवलम्ब्य (आंग्लभाषया) ('भारतीयविज्ञानपरम्परा' इत्येषः तु संस्कृतेन) रचिताः लघुग्रन्थाः।
- ❖ सम्भाषणसंस्कृतम्, गीतसंस्कृतम्, शिशुसंस्कृतम्, हितोपदेश-कथाः, प्रयोगः, श्रीकृष्णजननम्, संस्कृतोज्जीवनम्, गेय-संस्कृतम्, अमरकोषः (समग्रः) इत्यादयः **ध्वनिमुद्रिकाः**।
- ❖ स्वतन्त्रतया संस्कृताभ्यासार्थं **सान्द्रमुद्रिका**। (C.D.Rom)

एतदतिरिच्य विविधानि संश्लेषकाणि, शुभाशयपत्राणि, भाषाभ्यासाय सज्जीकृतानि वैज्ञानिकांशयुक्तानि च भित्तिपत्राणि इत्यादीनि अपि उपलभ्यन्ते।

रू. २०.००

ISBN 978-81-88220-52-6